॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला
५४

॥ श्रीः ॥

# मनोरमाशब्दरत्न-प्रश्नोत्तरावली

द्वितीय-तृतीयखण्डात्मकः द्वितीयो भागः

वैयाकरणभूषणसार-परिभाषेन्दुशेखर-व्याकरण-
महाभाष्याणां राजकीयपरीक्षासु समागतैः
प्रश्नैश्च संयोजितः ।



प्रकाशकः
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, बनारस

सं० २००५ ] मूल्यं ॥।=) [ १९४८ ई०

# लघुशब्देन्दुकला

## [ लघुशब्देन्दुशेखर-प्रश्नोत्तरी ]

इसमें परीक्षामें आने योग्य सभी प्रश्नोंके उत्तर ऐसे सरल तथा निर्दुष्ट परिष्कारों से युक्त लिखे गये हैं कि अभ्यास करलेने पर विद्यार्थी परीक्षामें पूरी सफलता प्राप्त कर लेगें तथा ग्रन्थ लगाने में भी विद्यार्थीको अत्यधिक सहायता मिलेगी। ऐसा प्रशंसनीय संस्करण यह प्रथम बार ही प्रकाशित हुआ है। १।)

# परमलघुकला

## ( परमलघुमञ्जूषाप्रश्नोत्तरी )

प्रस्तुत संस्करण में परीक्षा में आने योग्य सभी प्रश्नों के उत्तर ऐसे सरल तथा निर्दुष्ट परिष्कारों से युक्त लिख दिये गये हैं कि-"एक पन्थ दो काज" याने ग्रन्थ लगाने में भी इस से आपको अत्यधिक सहायता पहुँचेगी और कण्ठस्थ कर लेनेपर परीक्षा में अधिक से अधिक नम्बर भी पासकेगें। १)

# वृत्तरत्नाकरः

## भट्टनारायणभट्टीयव्याख्या सहित सुविस्तृत टिप्पणी व 'मणिमयी' भाषा टीका विभूषित।

विस्तृत भाषा टीका से परिवर्धित इस द्वितीय संस्करण से परीक्षार्थी विद्यार्थियों की सारी कठिनता दूर हो जायगी। नारायणभट्टीय व्याख्या के साथ २ सुविस्तृत टिप्पणी होने पर ही प्रथम संस्करण संस्कृत संसार में विशेष स्थान पाचुका था, पर इस बार मणिमयी विस्तृत भाषा टीका होने से तो यह द्वितीय संस्करण अत्यधिक परीक्षोपयोगी हो गया है। ३)

# सिद्धान्तकौमुदी जेबी-गुटका

## सूत्रसूची-धातुसूची-सूत्रांक-वार्तिकांक सहित

### सम्पादकः—पण्डित गोपाल शास्त्री नेने

सिद्धान्तकौमुदीका ऐसा सुन्दर जेबी गुटका का मनोहर संस्करण यह प्रथम बार ही छपा है। प्रति दिन सिद्धान्त कौमुदी की आवृत्ति करना विद्यार्थियोंके लिये आवश्यक है। सुबह-शाम घूमते-फिरते समय तथा परदेश-यात्रा करते समय विद्यार्थियोंका बहुत ही समय व्यर्थमें व्यतीत होजाता है। अब जहाँ कहीं जाना हो इस संस्करण को जेब में रख लीजिये और जब चाहें सिद्धान्तकौमुदी की आवृत्ति किजीये। ३)

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत-पुस्तकालय, बनारस।

THE

HARIDAS SANSKRIT SERIES

54.



# MANORAMĀ S'ABDARATNA PRAS'NOTTARĀVALĪ

[ BEING QUESTIONS & ANSWERS OF BHATTOJIDIKS'IT'S & HARIDIKS'IT'S PRAUḌAMANORAMĀ & S'ABDARATNA ]

BY

*Pandit S'ri Raja Narayan S'ukla*



( **PART-II** )



PUBLISHED BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhambâ Sanskrit Series Office.*

Benares City.

1937

॥ श्रीः ॥


हरिदास-संस्कृत-ग्रन्थमाला

५४


॥ श्रीः ॥

# मनोरमाशब्दरत्न-प्रश्नोत्तरावल्याः

## द्वितीयो भागः

[ द्वितीयोतृतीयखण्डात्मकः ]


जौनपुरवदलापुरउदयपुरगेल्हवानिवासिकौमुदीकल्पलतिकापरिष्कारदर्पणव्युत्पं-
त्तिवादशास्त्रार्थकलाद्यनेकग्रन्थकृद्घटिकाशतकशतावधानाशुकविप्रसिद्धा-
भिधेयपण्डितराजशुक्लश्रीवेणीमाधवशास्त्रिणामात्मजेन

**शुक्लश्रीराजनारायणशास्त्रिणा**

सङ्कलितः, सम्पादितश्च ।



प्रकाशकः—

**जयकृष्णदास हरिदास गुप्तः—**

**चौखम्बा संस्कृत सीरिज़ आफिस,**

बनारस सिटी ।

सं० १९९३ वै.

# वक्तव्यविशेषः ।

अये सरलहृदया अधिगतवाग्देवताविचित्रविभवा विद्वद्वरेण्या वैदुष्यकला-सम्पादनरता रमणीयचेतसश्शाब्दिकाश्छात्रनिवहाश्च ? अतिरोहितमेवैतद्दृष्टिपथाच्छ्रीमतां यद्राजकीयसंस्कृतपरीक्षासु विनिर्धारितश्शब्दरत्नसहितो मनोरमाग्रन्थः परीक्षार्थिनां कृते कीदृशङ्काठिन्यमावहतीति । एतस्य पठने पाठने च सुमहान् क्लेशोऽहर्दिवमनुभूयत एव शाब्दिकैः । प्रष्टारश्च लघीयसाऽपि शब्दसमुदायेन "अर्थवद्धातुः" इत्यादिवृहद्व्याख्यानशालिसूत्राणां संक्षिप्तव्याख्यानं समीहमाना अन्तेवसतान्धिषणां विमोहयन्तितराम् । एवं सति विमुग्धैस्तैः किमपि विलेख्यं यदिष्टाजनकमेव प्रतीयत इति । एवंविधकष्टापहारको दयनीयछात्रजनदयालुः कोऽपि ग्रन्थो नाद्यावधि प्रकाशितः । प्रकाशिता अपि केचिन्न यथावदुपकुर्वते । एतामेव क्लेशग्रन्थिं श्लथयितुकामेन मयाऽद्यावधि राजकीयपरीक्षासु समागतान् प्रायस्सर्वान् प्रश्नान् सङ्कलय्य ग्रन्थगान् कांश्चिदवशिष्टानपि प्रश्नदले विनिवेश्य समेषामुत्तरप्रणाली सरला प्रादर्शि । पूर्वन्तावत् पञ्चसन्धिपर्यन्त एव लेखः प्रथमभागरूपेण भवताञ्चक्षुर्गोचरीकृतः । अधुनातनन्द्वितीयतृतीयखण्डात्मको द्वितीयभागः आजन्तपुल्लिङ्गात् कारकान्तो भवद्भ्य उपहारीक्रियते । अत्रापि भागे केवलप्रश्नानामावृत्तये पृथक् सूची मनोहरति पश्चाच्च यथासंख्यमुत्तराणि विलसन्ति । अन्ते च वैयाकरणभूषणमहाभाष्यपरिभाषेन्दुशेखरादीनामपि परीक्षाऽऽगतप्रश्नास्समावेशिता इति व्याकरणशास्त्रिपरीक्षा दातुमनसां सुवर्णगन्धः ।

बहुधा कृतपरिशीलनेऽप्यत्र ग्रन्थे मानवस्वभावात्सम्भवद्दोषाणां क्षमापनेनेमं लेखं लेखकञ्चानुग्रहीष्यन्ति चेद्भवन्तस्सुधियो महाभागास्सफलः प्रयासस्स्यादिति ।

ग० स० कालेज
बनारस ।
रामनवमी सं० १९९४ वै०

भवदीयस्य:-
श्रीराजनारायणशुक्लस्य

श्रीगणेशायनमः ।

# मनोरमाशब्दरत्नप्रश्नोत्तरावली

## द्वितीयखण्डे ।

ध्यात्वा श्रीशपदारविन्दयुगलं नत्वा गिरं सुन्दरीम्,
पित्रोः पादयुगम्प्रणम्य मनसा वाचा तथा कर्मणा ।
ध्यायन्ध्यायमहर्निशन्धृतवतस्तेजस्तु बार्हस्पतम्,
प्रातःस्मर्यपदान् गुरून् मयि सदा यावद्दयाशालिनः ॥ १ ॥
यावच्छब्दमधीत्य तर्कितवचाः प्रोत्साहितस्सज्जनैः,
वेणीमाधवशास्त्रिणो भुवि यशःप्रख्यातनाम्नस्सुतः ।
लेखन्दीक्षितभीहतेऽतिसरलीकर्त्तुञ्च पारीक्षिकम्,
शुक्लो गर्गकुलप्रसूरलघुधीः श्रीराजनारायणः ॥ २ ॥
परीक्षापाशबद्धानां छात्राणां हितकाम्यया ।
कुर्वे मनोरमाशब्दरत्नप्रश्नोत्तरावलीम् ॥ ३ ॥
अजन्तपुल्लिङ्गादारभ्य स्त्रीप्रत्ययान्तभागे प्रश्नाः ।

१ प्रकृतिप्रत्ययभावापन्नविषयको नियमः किमर्थमङ्गीकृतःकिञ्च प्रकृतिप्रत्ययभावापन्नत्वम् ।

२ अचःपरस्मिन्नित्यत्र पञ्चमीसमासस्य प्रयोजनानामन्यथासिद्धिः कथम्प्रदर्शिता दीक्षितेन टीकाकृता च तत्र किमुक्तम् ।

३ "हल्ङ्याब्भ्य"इति सूत्रे हल्ग्रहणस्य वैयर्थ्यमुपपाद्य परिह्रियताम्, ङ्यापस्सोरिति न्यासस्यौचित्यञ्च प्रदर्शयत ।

४ "ष्णान्ता षट्"इतिसूत्रं व्याख्यायताम् ।

५ आत्वस्य वैकल्पिकत्वे"ऽष्टनो दीर्घा"तिसूत्रस्थस्य दीर्घग्रहणस्य ज्ञापकता कथमिति विविच्योच्यताम् ।

६ "शूद्रा चामहत्पूर्वा जाति"रित्यत्रामहत्पूर्वस्य वैयर्थ्यं कथम्मूले व्यवस्थापितम्, कथञ्च तच्छब्दरत्नकृता दूषितम्।

७ यथोत्तरम्मुनीनाम्प्रामाण्यम् अत्रत्यनवीनप्राचीनमते सम्यग् लिख।

८ यूष्ण इत्यत्र णत्वसम्पत्तये पूर्वस्मादपि विधौ स्थानिवद्भाव इति पक्षे तु अड्व्यवाय इत्येवात्र णत्वम्। अत्र मनोरमायाम् "इतिपक्षेत्वि"तिप्रतीकमुपादाय किमभिहितम्। भाष्यदत्तप्रयोजनानामन्यथासिद्धिःकथमभिहिता। अत्र प्राचाम्मतभेदोऽस्ति न वा, अस्ति चेत् स्फुटमभिधीयताम्।

९ अतिखट्वाय अतिसर्वायेत्युभयत्रापि याट्स्याटौ लक्षणप्रतिपदोक्तपरिभाषया वारयितुं शक्येते न वा। किञ्च लाक्षणिकत्वम् तत्प्रवृत्तिनिमित्तमित्यादि सर्वं लेख्यम्।

१० अपवादस्य डसो विषये उत्सर्गस्य णिवनोऽप्रवृत्तेःइत्यस्य किन्तात्पर्यम्, अत्रत्यशब्दरत्नकाराशयःसम्यगभिधीयताम्।

११ अतित्वाकमतिमाकमित्यत्राकमोऽप्राप्तिःकथमाशङ्किता किञ्च तत्र समाधानम्।

१२ "शूद्रा चामहत्पूर्वा जाति"रित्यत्रामहत्पूर्वग्रहणस्य"इन्द्रवरुणे"तिसूत्रे आनुग्विधानस्य च प्रयोजने विविच्य देये।

१३ "जातेरस्त्रीविषयादयोपधादि"त्यस्यार्थःसोदाहरणो देयःका चात्र जातिः"वोतो गुणेत्य"त्र किं गुणत्वम्।

१४ "अर्थवदधातुरप्रत्ययः"अत्र नव्यप्राचीनमतानुसारेणार्थवत्त्वं किम अधातुरितिपर्य्युदासेन तल्लाभे सिद्धे ग्रन्थकृदुक्तन्तत्फलं सम्यग् नवेति विविच्योच्यताम्।

१५ उभशब्दस्य द्वित्वविशिष्टार्थत्वेन सर्वादिगणे तत्पाठस्य किम् फलमभिहितम्। उभयशब्दस्य नास्तीति कैयटःअस्तीति हरदत्तः। अत्रोभयपक्षोत्थाने किम् मूलम्। उभयोश्च पक्षयोः कतरो युक्तः, कृत्तद्धितानां ग्रहणञ्च पाठेऽस्य किन्तात्पर्यम् इति भाव इति प्रतीकमुपादाय शब्दरत्नकृदभिहितम् इत्यभिमान इत्यर्थः अस्य किन्तात्पर्यम्।

१६ "न बहुव्रीहावि"त्यस्य कोऽर्थो ग्रन्थकृदभिहितः। यत्तु प्राचोक्तमित्यारभ्य प्राचीनमतञ्च किं कथञ्च मनोरमाकारेण खण्डितं तदेतत् सर्वम्

प्रमाणादिकमेवेत्यत्र किं सर्वं तदुपपाद्यताम् । कथञ्च तस्य प्रामादिकत्वम् । यथोत्तरम् मुनीनाम्प्रामाण्यमत्र किं बीजम् ।

१७ "नलोपःसुब्वि"तिसूत्रस्य नियमार्थता कथम्, नियमशास्त्राणां विधिमुखेन प्रवृत्तिर्निषेधमुखेन वेति प्रतीकमुपादाय शब्दरत्नकृता प्रसङ्गान्मीमांसकमतानुसारेण दोषत्रयापत्तिराशङ्किता । कानि च दूषणानि कथञ्च प्रकृते तत्प्राप्त्यवसरःकश्च तदुद्धारप्रकार इत्याशङ्कासमाधानं विविच्य लेख्यम् ।

१८ "प्रत्ययस्थात् कादि"स्य कोऽर्थः पूर्वस्य अत आपि असुपः एषाम् पदानांग्रहणस्य प्रयोजनानि मनोरमाशब्दरत्नकृद्दिशा सम्यग् लेख्यानि । विधौ परिभाषोपतिष्ठते नानुवादे एतद्वचनस्य प्रकृते कथम्प्रसङ्गःकश्च तदर्थ इति विचार्य लेख्यम ।

१९ "स्वाङ्गाच्चापसर्जनादि"त्यत्र किं स्वाङ्गम् ।

२० "अर्थवदधातुरप्रत्ययःप्रातिपदिकम्""कृत्तद्धितसमासाश्चे"ति सूत्रे साधकबाधकप्रमाणोपन्यासपुरस्सरं व्याख्येयाताम् । किञ्चोभयत्रोभयाभितमर्थवत्त्वम् । नव्यप्राचीनयोरधातुरप्रत्ययः इत्यत्र च पर्युदासविषये का व्यवस्था, प्रत्यय इति महासंज्ञां कुर्वतःसूत्रकृतःक आशयः ।

२१ "प्रत्ययलोपे प्रत्ययलक्षणम्"एतत्सूत्रं मनोरमाशब्दरत्नयोःआशयानुसारेण सम्यग् व्याख्यायताम् । प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणम्, अत्र किं बीजम, द्वितीयप्रत्ययग्रहणस्य च किम्फलम् ।

२२ "नुमचिरतृज्वद्भावेभ्य"इत्यत्र रेण बाध्यसामान्यचिन्तया गुणादेरिव नुटोऽप्यपवादकत्वस्वीकारे उत्सर्गापवादयोःविप्रतिषेधासम्भवात् कथमेतत्सङ्गतिरिति सम्यक् समाधीयताम् ।

२३ अनुपसर्जनाधिकारस्य फलं वदता मनोरमाकारेण बहुयुवा शालेत्यत्र"यूनस्ति"रुपसर्जनत्वम् इति प्राञ्च आहुरित्युक्तम् । तत्र प्राञ्च आहुरित्युक्तेःक आशयः ? अत एव कौम्भकारेयसिद्धिरिति वदतःशब्दरत्नकारस्य च क आशय इति वैशद्येनोपपाद्यताम् ।

२४ जातिस्वाङ्गयोर्लक्षणे मनोरमाशब्दरत्नकृन्मतानुसारेण सम्यगुपपादनीये सोदाहरणे ।

२५ धातुसाहचर्यं प्रातिपदिकांशे समन्वितस्य निर्दिश्यताम् ।

२६ प्रत्ययलोपसूत्रस्य भाष्यमतेन नियमार्थत्वे किम्फलं कथञ्च तत् ।

२७ "अष्टनो दीर्घादि"ति सूत्रस्थदीर्घग्रहणस्य चारितार्थ्यं कथमिति साधूच्यताम् ।

२८ "अन उपधालोपिन"इत्यत्र मनोरमाशब्दरत्नयोर्मते पृथगुपपाद्य तयोर्युक्तायुक्तत्वे विविच्येताम् ।

२९ अर्थात् परत्वञ्चामः शब्दद्वारकम् अत्र मनोरमाशब्दरत्नकारयोर्मते को विशेषः किञ्च तयोर्युक्तम् ।

३० प्रत्ययान्तपर्युदासाभावे काण्ड इत्यत्र लुक् निर्दिष्टोपायेन परिहरणीयः ।

३१ "न बहुव्रीहौ"इत्यत्र मनोरमाशब्दरत्नकारयोर्विशेषः प्रदर्शनीयः ।

३२ "दादेर्धातोर्घ"इत्यत्रोपदेशार्थलाभो मूलव्याख्ययोःकथन्दर्शितस्तत्र युक्तञ्च किमिति प्रदर्शयत ।

३३ "नलोपःसुप्स्वरे"तिसूत्रे कथम् परिसंख्यायाम् नियमत्वेन कृतो ग्रन्थकृता तत्सर्वं गमयत ।

३४ नारीत्यत्र रेफे वृद्धिव्यावृत्तिःकथं कृता तत्साधूपपाद्यताम् ।

३५ ङेप्रभृतीनां ङकारो घेर्ङितीति विशेषणार्थं इति ग्रन्थमवलम्ब्यशब्दरत्नकृता किमुक्तम् । कश्च"जसि चे"ति नियमाकार इति साधूपपादय ।

३६ एवकारापकर्षो भाष्ये कथं ध्वनितः, सति च तदपकर्षे तदर्थस्य कुत्रान्वयःकथञ्चात्र पतितानां दोषाणामुद्धारः, अपकर्षानपकर्षयोः कतरद् युक्तमिति एतत् सर्वं समुपपाद्य अविरविकन्यायेनेति ग्रन्थस्य क उपोद्घातः किञ्च तत्स्वरूपन्तत् सर्वं लिख ।

३७ "न बहुव्रीहावि"तिसूत्रे न्यासकृन्मतं द्वितीयतदपीत्यादिना किं भणितमिति साधूपपादयत ।

३८ त्वदधरमधुरमधूनि पिबन्तमित्यत्र कृष्णस्य शठनायकत्वं निराकृत्य यथालक्षणमप्रयुक्ते ग्रन्थकृत्सम्मतमर्थम्प्रदर्श्य युक्तोऽर्थो विचार्यः ।

३९ "तद्धिता"इतिसूत्रे भाष्ये तत्पाठस्य प्रत्याख्यानात् इति दिगिति मनोरमाग्रन्थःकश्चात्रत्यो दिगर्थ इति सूपपाद्यताम् ।

४० प्रकृतिप्रत्ययभावानापन्नविषयको नियमः किमर्थमङ्गीकृतःकिञ्च प्रकृतिप्रत्ययभावानापन्नत्वम् ।

४१ "अचःपरस्मिन्नि"त्यत्र पञ्चमीसमासप्रयोजनानामन्यथासिद्धिः कथम्प्रदर्शिता दीक्षितेन, किञ्च टीकाकृतोक्तम् ।

४२ "हल्ङ्या"दिसूत्रे प्रथमहल्ग्रहणस्य वैयर्थ्यमुपपाद्य परिह्रियताम "ङ्यापस्सोरि"तिन्यासस्यौचित्यञ्च प्रदर्शयत ।

४३ "ष्णान्ता षट्"इति सूत्रं व्याख्यायताम् ।

४४ आत्वस्य वैकल्पिकत्वेऽष्टनो दीर्घादिति सूत्रस्थस्य दीर्घग्रहणस्य ज्ञापकता कथमिति विविच्योच्यताम् ।

४५ "शूद्रा चामहत्पूर्वे"तिवार्त्तिकेऽमहत्पूर्वेत्यस्य वैयर्थ्यं कथम्मूले व्यवस्थापितम्, कथञ्च तच्छब्दरत्नकृता दूषितम् ।

४६ पूर्वसूत्रेऽर्थवत्पदस्यान्यथासिद्धिमाक्षेपसमाधानपुरस्सरमुपपाद्योत्तरार्थवत्त्वं सप्रमाणमुपपाद्यताम् ।

४७ समासादौ विशिष्टशक्त्यभाववादिसाधारण्येन समासग्रहणस्य नियमार्थत्वमुपपाद्य प्रकृतिप्रत्ययभावानापन्नत्वप्रदर्शनबीजं सपरिष्कारमुपपाद्यताम् ।

४८ एवकारापकर्षस्य शब्दरत्नरीत्या भाष्यध्वननमुपदर्श्य युगपदधिकरणतापदार्थस्सप्रयोजनो निरूपणीयः ।

४९ अखण्डपदत्वं शब्दरत्नदर्शितदिशा सपदकृत्यमुपवर्ण्य पञ्चमीसमासस्य पाक्षिकत्वध्वननमुपपादनीयम् ।

५० अष्टन आत्वस्य विकल्पाभावे दीर्घग्रहणस्य ज्ञापकत्वं साक्षेपसमाधानं शब्दरत्नदर्शितदिशोपपादनीयम् ।

५१ डाप्सूत्रेऽन्यतरस्यांग्रहणस्य मनोरमोक्तदिशा सार्थक्यमुपपाद्यताम् ।

५२ प्राचीनमतम्प्रतिक्षिप्य नवीनमतेनार्थवत्त्वं सपदकृत्यमुच्यताम् ।

५३ अविरविकन्यायेन समाधानन्तु लक्षणैकचक्षुष्कैर्दुर्ज्ञेयम् किन्यायस्वरूपम् किञ्च तेनात्र समाधानं विवक्षितं कथञ्च दुर्ज्ञयतेत्युपपाद्य तन्त्रेण सिद्धे एकशेषारम्भस्समर्थनीयः ।

५४ "षड्भ्य"इतिबहुवचननिर्देशं मदभेदेनोपपाद्य प्रत्ययलोपसूत्रस्य

विध्यर्थत्वन्नियमार्थत्वं वा कतरद् भवदभिप्रेतम् इति तत्तत्पक्षोपपादनेनोपपादनीयम् ।

५५ "दादेरि"तिसूत्रे उपदेशे दादेरित्यर्थाश्रयणम् दादेर्धातोर्वाऽप्रवृत्त्या लक्षणया वा युक्तमिति विवेचनीयम् ।

५६ अनुपसर्जनाधिकारसार्थक्यं शब्दरत्नदर्शितदिशोपपाद्यताम् ।

५७ प्राचीनमतप्रतिक्षेपेणार्थवत्त्वमुपपाद्य तत्प्रयोजनं शब्दरत्नरीत्या विशद्यताम् ।

५८ ङ्याधिकारखण्डनबीजं स्वार्थादिप्रयुक्तकार्याणाम् क्रमिकत्वमुक्तं तत्किं क्रमिकत्वबीजं कथञ्च समासान्तातिव्याप्तिवारणमिति विवेचनीयम् ।

५९ पूर्वविधावित्यत्र पञ्चमीसमासावश्यकत्वानावश्यकत्वे मनोरमाशब्दरत्नदिशोपपाद्य प्रथमहल्ग्रहणप्रयोजनमनन्यथासिद्धमुपपादनीयम् ।

६० स्याड्विधौ अमुङ्म् इतिन्यासम्प्रति क्षेपोपायो दर्शनीयः ।

६१ डाप्सूत्रेऽन्यतरस्यांग्रहणप्रयोजनमाक्षेपनिरासेनोपपाद्य नृनरयोर्वृद्धिश्चेत्यत्र नरशब्दे अन्त्यवृद्धिवारणमन्यमतनिरासेनोपपादनीयम् ।

६२ "कृत्तद्धिते"तिसूत्रे समासग्रहणस्य नियमार्थत्वमुपपाद्य तदाकारञ्च प्रदर्श्य प्रकृतिप्रत्ययभावानापन्नत्वम्परिष्क्रियताम् ।

६३ सरूपसूत्रे एवकारापकर्षः कथम्भाष्ये ध्वनितः, तदर्थस्य च कुत्रान्वयः, एवकारापकर्षो युक्तो नवेति स्पष्टमुच्यताम् ।

६४ "प्रत्ययलोप"इतिसूत्रं मनोरमाशब्दरत्नोक्तदिशा व्याख्यायताम् ।

६५ "दादेर्धातो"रितिसूत्रे उपदेशे दादिरित्यर्थःकथं साधितश्शब्दरत्नकृता सोऽर्थो युक्तो नवेति विवेचनीयम् ।

६६ "शूद्रा चामहत्पूर्वे"त्यत्र मनोरमाकृता जातिग्रहणस्यामहत्पूर्वेत्यस्य च वैयर्थ्यं कथमुपपादितम् शब्दरत्नकृता च तयोरावश्यकत्वं कथमुक्तम्, अमहत्पूर्वेत्यत्र जातिसम्बन्धे च किम्फलम् ।

६७ अर्थवद्ग्रहणस्य मनोरमोक्तम्प्रयोजनम्प्रदर्श्य तदुपरि शब्दरत्नकृता विहितो विमर्शःप्रदर्शनीयः । प्राचीनमतानुसारेण अर्थवत्त्वम्परिष्कृत्य शब्दरत्नकारस्य तत्परित्यागे बीजमुपवर्ण्य तन्मतानुगतमर्थवत्त्वं सप्रमाणमुपपाद्यताम् परिष्क्रियताञ्च ।

६८ "इच्चापस्से"रितिन्यासमुपपाद्य तन्निराकरणपुरस्सरं निर्दोषो न्यासः स्थापनीयः ।

६९ सर्वे सर्वपदादेशा इत्यस्य ज्ञापकं सम्यङ्निरूप्य सामःस्थानित्वं सप्रयोजननिर्देशमुपपाद्यताम् ।

७० "पुंसोऽसुङि"तिसूत्रेऽनुवर्त्तमाने सर्वनामस्थान इत्यत्र परसप्तमी विषयसप्तमी वा न्याय्येति सयुक्तिकम्प्रतिपाद्य सिद्धान्तपक्षेऽपि दोष आशङ्क्य समाधीयताम् ।

७१ "शूद्रा चामहदि"तिवार्त्तिकस्य प्रत्याख्यानप्रकारम्प्रदर्श्य भाष्यसम्मतोऽत्रत्यःसिद्धान्तःसुष्ठु निरूपणीयः ।

७२ अर्थवत्त्वस्वरूपे प्राङ्नव्यमतेन सम्यङ् निरूप्य लाघवानुगृहीतम्मतं सोपपत्ति प्रदर्शनीयम ।

७३ युगपदधिकरणवचनतायाःस्वरूपं सोपपत्ति प्रदर्श्य एवकारापकर्षः सिद्धान्तसिद्धो नवेति सप्रमाणमभिधीयताम् ।

७४ "प्रत्ययलोपे प्रत्ययलक्षणमि"तिसूत्रे मनोरमोक्तम्पक्षद्वयमुपपाद्य तयोर्युक्तं किं कश्च तत्र नियमाकारो ग्रन्थकृताम्मतः ।

७५ यूयम् वयमित्यत्र प्राप्तशशोभावो यया परिभाषया परिहृतः तत्र प्रमाणं किम्, किञ्च तस्या अनन्यथासिद्धम्फलम्, किञ्च तत्र परिहारान्तरमिति स्फुटमभिधीयताम् ।

७६ ब्रह्माणीत्यस्य सिद्धये व्याख्याताः प्रकाराः के, तैस्साधयितुं शक्यते नवेति युक्तियुक्तमुच्यताम् ।

७७ सरूपसूत्रे एवकारापकर्षे प्रमाणम्फलञ्च निरूप्य तदर्थान्वयञ्च प्रदर्श्य सारूप्यम्परिष्कुर्वन्तु ।

७८ आदर्शेनेत्यत्र ग्रन्थकारकृतं णत्ववारणोपायम्प्रदर्श्य तस्यायुक्तत्वञ्चोपपाद्य युक्तमुपायम्प्रदर्शयतु ।

७९ "प्रत्ययलोपे प्रत्ययलक्षणमि"तिसूत्रस्य नियमार्थत्वं विध्यर्थत्वञ्चोपवर्ण्य निर्दुष्टो नियमाकारो दर्शनीयः ।

८० "साम आकमि"तिसूत्रम्मनोरमोक्तरीत्या व्याख्याय शब्दरत्नकृत्कृतो विशेषः साधु प्रदर्शनीयः ।

८१ एतदादेशस्यैनादेशेन गतार्थत्वमुपपाद्य "शूद्रा चामहत्पूर्वा जातिरि"ति वार्त्तिकं व्याख्यायताम् ।

८२ "सरूपाणामेकशेष एकविभक्ताविं"त्यत्र एकविभक्तावित्यस्य प्रयोजनम्प्रदर्श्य साफल्यञ्च परिष्कृत्यैवकारापकर्ष प्रमाणम्फलञ्च निरूप्य तत्र भाष्यकारानुग्रहो विचारणीयः ।

८३ श्रुतस्यानुमितस्य चाष्टन आत्वस्य वैकल्पिकत्वेऽष्टनो दीर्घादिति-सूत्रस्थदीर्घग्रहणस्य ज्ञापकत्वं समुपपाद्य "यथालक्षणमप्रयुक्त"इतिभाष्यं कैयटेन कथं व्याख्यातम्, किञ्च तत्र युक्तमिति सोपपत्तिकं निरूपणीयम् ।

८४ "युस्मदस्मद्भ्यांङसोऽशि"तिसूत्रेऽशादेशस्य शित्त्वप्रयोजनम्मनोरमाशब्दरत्नोक्तरीत्या निरूप्यातित्वाकमित्यादौ नुडभावोपायः प्रदर्शनीयः ।

८५ "शूद्राचामहत्पूर्वा जाति"रितिवार्त्तिकम्मनोरमोक्तरीत्या व्याख्याय तत्र शब्दरत्नकृत्कृतविशेषञ्च निरूप्य जातिवाचकत्वम्परिष्करणीयम् ।

८६ अभिहिते त्विति प्रतीकमुपादाय मनोरमाकृता नन्वेवम् पक्वमोदनम्भुंक्ते इत्यत्रापि द्वितीया न स्यात् इत्याद्येवञ्च विवक्षाभेदेन पूजयितुं शक्यते हरिर्हरिवेति द्वयं साध्वित्यन्तेन किमभिहितं, रत्नकृता च तत्र को विशेषो दर्शित इतिं विशदं निरूपयत ।

८७ "अतोम्"इत्यत्र मिति च्छेदोऽमिति वेत्युपक्षिप्य मूलव्याख्ययोर्मतभेदोपपादनपुरस्सरम् युक्तः कल्पो व्यवस्थाप्यताम् ।

८८ "अष्टनो दीर्घादि"तिसूत्रे दीर्घग्रहणस्य चारितार्थ्यं कियत्या कल्पनया सम्पादितं स्फुटं स्फोरणीयम् ।

८९ "युष्मदस्मद्भ्यां ङसोऽ"शिवधाने शित्करणस्य प्रयोजनं किमभिहितम्मनोरमारत्नाभ्याम् ।

९० "शूद्राचामहदि"त्यत्र जातेरित्यस्य प्रयोजनम्मूलव्याख्यानुसारेण पृथगभिधाय तदुभयोर्युक्तायुक्तत्वं समर्थनीयम् ।

९१ अनभिहिताधिकारस्य प्रयोजनं ग्रन्थच्छायामाश्रित्योच्यताम् ।

९२ "दिवः कर्मचे"त्यत्र समुच्चायकचशब्दोपादानेन सम्पादितम्फलमसङ्कीर्णतयाऽभिधानीयम् ।

९३ "ध्रुवमपाये"इत्यत्र प्राङ्नव्यमतभेदेन ध्रुवपदार्थः कः, तत्र च युक्तः क इत्यविरोधेनोपपादनीयम् ।

९४ "अद्कुप्वाङिति"सूत्रे मनोरमायामादर्शेनेत्यत्र णत्ववारणोपायःकः प्रदर्शितः, शब्दरत्नकृता च कः प्रदर्शितः, कश्च युक्त इति समुपपादनीयम्।

९५ "द्वन्द्वे चेतिसूत्रे समुदायस्यायं निषेध इति प्रतीकमुपादाय मनोरमायां किमभिहितम् शब्दरत्नकृता च तत्र किमुक्तमिति विशदन्निगद्यताम्।

९६ "एरनेकाच"इतिसूत्रे धातुपदस्यावृत्त्यनुवृत्त्योः प्रमाणम्फलञ्च प्रदर्श्य शब्दरत्नकृतोपदर्शितविशेषश्च सङ्कलनीयः।

९७ अष्टन आत्वस्य वैकल्पिकत्वे दीर्घादित्यस्य ज्ञापकत्वं समुपपाद्य तत्रत्यचोद्यपरिहारौ शब्दरत्नकृतोपदर्शितौ समुल्लेख्यौ।

९८ "उदीचामातः स्थान"इतिसूत्रे आतःस्थान इति ग्रहणस्य प्रयोजनं सयुक्तिकमुपदर्शनीयम्।

९९ "सरूपाणामेकशेष एकविभक्ताविं"तिसूत्रे एवकारापकर्षो भाष्ये कथं ध्वनितः, तदर्थश्च कान्वेति, निरुक्तसूत्रार्थश्च कीदृशः, सारूप्यञ्च किमिति सर्वं सुलेखेन निरूपणीयम्।

१०० "प्रत्ययलोपे प्रत्ययलक्षणमि"तिसूत्रस्य विध्यर्थत्वे कानि प्रयोजनानि, कथञ्च तानि भगवताऽन्यथासिद्धानि कृत्वाऽस्य सूत्रस्य नियमार्थत्वं समर्थितम्, नियमाकारश्च कीदृश इति सर्वं निर्वचनीयम्।

१०१ "दादेर्धातोर्घ"इतिसूत्रम्मनोरमाशब्दरत्नोक्तरीत्या सम्यग् व्याख्याय तत्रोपदेशग्रहितव्याख्यानस्य युक्तत्वायुक्तत्वे च विवेच्ये।

१०२ "साम आकमि"तिसूत्रस्थससुट्कनिर्देशस्य सुणिनवृत्त्यर्थत्वं निरुच्य प्रियत्वाकमित्याद्युपसर्जने नुणिनवृत्तिः कथमित्युच्यताम्।

१०३ "शूद्राचामहदि"तिवार्त्तिकम्मनोरमाशब्दरत्नोक्तसरणिमनुसृत्य विवृत्य जातिवाचकत्वम्परिष्क्रियताम्।

१०४ "ङाबुभाभ्यामि"तिसूत्रंशब्दरत्नसमन्वितं व्याख्यायताम्।

१०५ प्राचाम् नरशब्देऽन्त्याकारस्य वृद्धिनिरासवादो निरसनीयः।

१०६ अनुपसर्जनाधिकारस्य ज्ञाप्यभागः साधु सफलञ्च निस्फार्यताम्।

१०७ प्राचाम्मतनिरासपूर्वकम् "प्रत्ययस्थात् कादि"तिसूत्र व्याख्यायताम्।

१०८ मनोरमोक्तरीत्या एतदादेशं व्याख्याय शब्दरत्नसिद्धान्तो दर्शनीयः।

१०९ "साम आकमि"त्यत्र गौणे आकमूत्राधिकाम् प्राग्भिरुक्तां युक्तिं परिखण्ड्य वस्तुतस्त्वित्यादिना केन क आशयः प्रकाटि साधु निरूपणीयम् ।

११० पुत्रशब्दस्य शार्ङ्गरवादिगणे पाठादेवेष्टसिद्धौ सूतोग्रराजेतिवार्त्तिकं शब्दरत्नदिशा सफलीक्रियताम् ।

१११ "तदोः सः सावनन्त्ययोरि"तिसूत्रेऽनन्त्यग्रहणस्य सफलत्वमुपपाद्य खण्डयितुं शक्यते चेत् सप्रमाणं खण्डनीयम् ।

११२ प्रियाष्ट्न इत्यत्र ष्टुत्वाभावः साधु समर्थ्यताम् ।

११३ प्रियाष्टादीनामनभिधाने विवदमानमतयोर्भेदम्प्रदर्श्य तयोः कतरद् युक्तमिति निर्द्धार्यताम् ।

११४ "अष्टन आ विभक्तावि"तिसूत्रे हल्ग्रहणापकर्षोऽनावश्यक आवश्यको वेति सप्रमाणमुपपाद्यताम् ।

११५ मघवानित्यत्र शब्दरत्नोक्तविशेषनिर्वचनपुरस्सरन्दीर्घस्साधनैस्साधु साध्यताम् ।

११६ "दादेर्धातोर्घ"इत्यत्र दादेर्धातोर्वाऽऽवृत्त्याचोपदेशार्थलाभ इति प्रमाणीकृत्योच्यताम् ।

११७ पथीयतेः क्विन्निष्पन्नपथीशब्दस्य कानि रूपाणि "इतोऽत् सर्वनामस्थाने"इत्यत्र तपरत्वं वदता सूत्रकृताऽभिप्रेतानि शब्दरत्नकारत्रिमतनिरासपुरस्सरमुद्भावनीयानि ।

११८ प्रियपञ्चन्शब्दादामि किं रूपम् नुटस्तत्र प्रवृत्तिर्ज्यायसी न वेति साधूच्यताम् ।

११९ प्रियत्रिशब्दे पुल्लिङ्गे तिस्रादेशविषये मनोरमाकारमतमुपन्यस्य शब्दरत्नमतञ्चोपस्थाप्य सिद्धान्तयत ।

१२० "सर्वनाम्नोऽसुङ्चे"तिन्यासविषये मनोरमाकारमतमुपन्यस्य रत्नकारस्य सिद्धान्तो दर्शनीयः ।

१२१ "अतोऽमि"त्यत्रामितिच्छेदो मिति वा, मितिच्छेदे प्राचीनोक्ताक्षेपनिरासपुरस्सरम्मूलकारमतम्प्रदर्श्य समर्थ्य च शब्दरत्नरीत्या निरस्यताम् ।

१२२ यण्विधायके "एरनेकाच"इति सूत्रे किमर्थन्धातुपदानुवृत्तिः किमर्थञ्च तदावृत्तिरिति स्पष्टयत ।

१२३ औतस्तित्त्वं युक्तमयुक्तं वा मूलशब्दरत्नरीतिरुपन्यस्यताम् ।

१२४ "रषाभ्यान्नो णस्समानपदे" इत्यादौ किन्तावत् समानपदत्वं कथन्न वा रामनगरमित्यादौ णत्वं शब्दरत्नरीत्याऽऽपाद्य निराक्रियताम् ।

१२५ एकशेषविधायके सरूपसूत्रे एवकारापकर्षौ भाष्यरीत्या ध्वन्यताम् ।

१२६ "अचः परस्मिन्नि" त्यत्र पञ्चमीसमास आवश्यकोऽनावश्यको वाऽनित्यो नित्यो वेति मूलटीकोभयरीतिमनुसृत्योच्यताम् ।

१२७ उभशब्दस्य सर्वनामत्वे फलमस्ति न वेति निगद्य किमत्र भाष्यकारमतन्तदिह युक्तमयुक्तं वेति विशदीक्रियताम् ।

१२८ आदर्शनेत्यत्र णत्वमापाद्य वार्यताम् ।

१२९ मूलशब्दरत्नरीत्या "द्वन्द्वे चे" तिसूत्रं सविशेषमुपन्यस्यताम् ।

१३० मनोरमारीत्या "अल्लोपोऽन" इतिसूत्रम्व्याख्याय शब्दरत्नकारमतमत्रत्यमवश्यमुपन्यस्यताम् ।

१३१ "ङ्याप्प्रातिपदिकादि" तिसूत्रे ङ्याब्ग्रहणस्य फलमस्ति न वा ? अस्ति चेन्मूलोक्तप्रकारैर्निराक्रियताम् ।

१३२ "कृत्तद्धितसमासाश्चे" तिसूत्रे समासग्रहणस्य विध्यर्थत्वं कुतो नेति सोपपत्तिकं समाधाय नियमार्थत्वं समर्थ्यताम् ।

१३३ "सम्बन्धिशब्दस्सापेक्षो नित्यं सर्वःस्समस्यते" इति कारिकाद्वयमुपन्यस्य सोपस्कारं व्याख्यायताम् ।

१३४ प्रतिपदकृत्यनिर्वचनसहितं सरूपसूत्रं साधु व्याख्यायताम् ।

१३५ "किमः क" इतिसूत्रे ककारोच्चारणस्य किम् प्रयोजनं साधूपपाद्यताम् ।

१३६ "अर्थाच्चामः परत्वं शब्दद्वारकमि" त्यत्र शब्दरत्नमतं सम्यगुपपाद्य "षट्चतुर्भ्यश्च" इतिसूत्रं संक्षेपतो व्याख्यायताम् ।

१३७ तृज्वद्भावविधायकं "तृज्वत्क्रोष्टुः" इतिसूत्रं नियमार्थं विध्यर्थं वा आदेशाः कतिविधाः कस्य च तेषाम्मध्येऽतिदेश इति सविनिगमकं ब्रूत ।

१३८ "ङिति ह्रस्वश्चे" तिसूत्रे नित्यस्त्रीलिङ्गाविति कस्य विशेषणं, कथन्न तस्य ह्रस्वविशेषणत्वमित्युपपाद्यताम् ।

१३९ नियमशास्त्राणां निषेधमुखविधिमुखान्यतरेण प्रवृत्तौ "नलोपः सुप्" इतिसूत्रे को विशेषसम्भव इति निगद्यताम् ।

१४० "पथिमथ्यृभुक्षामादि"तिसूत्रेऽनुनासिकाकारविधानं समर्थ्यताम्।

१४१ "शेषे लोप"इत्यत्रान्त्यलोपटिलोपौ सयुक्ति समर्थनीयौ ।

१४२ "अन्वादेशे नपुंसके एनद् वक्तव्य"इत्यत्र नव्यप्राच्यमतविशेषः परिदर्श्यताम् ।

१४३ "इग्यणस्सम्प्रसारणमि"त्यत्रार्थेऽन्योन्याश्रय उद्भाव्य वार्यताम्।

१४४ "पुंसोऽसुङि"त्यत्र विवक्षित इत्यस्य फलन्तात्पर्यञ्चाभिधाय नाभावे कर्त्तव्ये कृते चेत्यर्थौ "नमुने"इतिसूत्रात् सम्यङ् निस्सारणीयः ।

१४५ दधिसेचाविस्यत्र षत्ववारणप्रकारो मनोरमाशब्दरत्नोक्तो विशद्यताम्।

१४६ विभक्त्यन्तानामेकशेषः प्रातिपदिकान्तानां वेति विशद्य सरूपसूत्रं सपदकृत्यं साधु व्याख्यायताम् ।

१४७ गुणदीर्घोत्त्वानामपवाद इति प्रतीकीकृत्य किं विवेचितम्मनोरमाशब्दरत्नकृद्भ्याम् ।

१४८ "द्वन्द्वे चे"तिसूत्रं समुदायस्य सर्वनामसंज्ञानिषेधकमाहोस्विदवयवानामिति ग्रन्थोक्तरीत्या व्याख्यायताम् ।

१४९ नदीसंज्ञाविधायकं "यूस्त्र्याख्यौ"इतिस्त्रोस्संज्ञां विदधाति तदन्तस्य वेति निरुच्य किन्तावत् नित्यस्त्रीत्वमिति परिष्क्रियताम् ।

१५० "युष्मदस्मद्भ्यांङसोऽशि"तिसूत्रं स्वाधीतग्रन्थानुसारेण सविशेषं व्याख्यायताम् ।

१५१ "पुंयोगादाख्यायामि"तिसूत्रे योगशब्दार्थः कोऽस्ति किञ्च तथा फलमिति सविस्तरं सप्रमाणञ्चोच्यताम् ।

१५२ डाब्विधायके "डाबुभाभ्यामन्यतरस्याम्" इत्यत्रान्यतरस्यांग्रहणं किमर्थमित्यभिधाय "अन उपधालोपिन"इत्यस्य नियमार्थता साधु स्पष्टीकर्त्तव्या ।

१५३ अतित्वाकमिति प्रयोगो मनोरमाशब्दरत्नरीत्या साधु समर्थ्याक्षेपा निराक्रियन्ताम् ।

१५४ बहुश्रेयसी कुलमित्यत्र ह्रस्वः कुतो नेत्यापाद्य स्वाधीतग्रन्थानुसारं निवार्यताम् ।

१५५ स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वे किं बीजमिति शब्दरत्नरीत्या प्रदर्श्य सप्रमाणं ङ्याब्ग्रहणप्रयोजनमुल्लिख्य समासान्तातिप्रसङ्गो वारणीयः ।

१५६ "न बहुव्रीहावि"त्यत्राक्षेपनिरासपुरस्सरं दीक्षितमतं स्पष्टयत ।

१५७ "रषाभ्यामि"तिसूत्रे समानग्रहणं किमर्थमित्युच्यताम् ।

१५८ "प्रत्ययलोपे प्रत्ययलक्षणमि"तिसूत्रस्य विध्यर्थत्वं नियमार्थत्वं वेति वादिविप्रतिपत्तिनिरासपुरस्सरमुच्यताम् ।

१५९ हल्ङ्यादिसूत्रे प्रथमहल्ग्रहणप्रयोजनं स्वाधीतग्रन्थानुसारेण निगद्य "अनङ् सौ"इत्यस्य स्थाने "सोडें"तिन्यासो युज्यते न वेति सयुक्तिकं संक्षेपतो व्याख्यायताम् ।

इतीमे एव प्रश्नास्सम्भवन्ति ।

---

## तृतीयखण्डे

### कारकाव्ययीभावयोः प्रश्नाः ।

१ "गतिबुद्धी"तिसूत्रस्य समुचितमर्थम्प्रतिपाद्य विध्यर्थत्वं नियमार्थत्वञ्च सविस्तरमुल्लिख्य तयोर्युक्तियुक्तः पक्षः स्थापनीयः ।

२ "दिवस्तदर्थस्ये"तिसूत्रस्यार्थम्प्रतिपाद्य अत्र सूत्रे शेष इति सम्बध्यते न वा ? नो चेत् कथमिति सप्रमाणमुपपाद्यताम् ।

३ "अकथितञ्च"इतिसूत्रस्य समुचितमर्थम् प्रतिपाद्योदाहरणनिरूपणपुरस्सरं तत्सूत्रावश्यकताम्प्राङ्नव्यमतभेदप्रदर्शनपुरस्सरं निर्वर्ण्य समुचितपक्षो व्यवस्थाप्यताम् ।

४ प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥ १ ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते ॥ २ ॥

इति हरिकारिकाद्वयं सम्यग् व्याख्याय "पक्वौदनो भुज्यते" इत्यादिप्रयोगविषये प्राचीननवीनयोर्मते पृथङ् निरूप्य तत्र युक्तायुक्तत्वे विवेचनीये ।

५ "कर्तुरीप्सततमंकर्मे"ति न्यासे दोषोद्भावनपुरस्सरमत्र वर्त्तमाने क्तस्तथापि वर्त्तमानत्वमविवक्षितमिति सप्रयोजनमुपपाद्यात्र पक्षे षष्ठी कथमिति निरुच्यताम् ।

६ प्रातिपदिकार्थस्सत्तेति केषाञ्चिन्मतं स्वाधीतग्रन्थानुसारेणोद्भाव्य परिदूष्यताम् ।

७ अधिकरणशक्तिप्रधानेभ्यः उच्चैरादिभ्यः कथन्दीक्षिताः प्रथमाविभक्तित्वमुपपादयन्ति ।

८ "अनभिहिते" इत्यधिकारशास्त्रस्य प्रयोजनमस्ति न वा ? अस्ति चेत् किमिति सिद्धान्तीक्रियताम् ।

९ प्राचीननवीनमतानुसारेण प्रातिपदिकार्थत्वमुपपाद्य अर्थे प्रथमेति न्यासमापत्त्यनुपपत्तिनिराकरणद्वारोपपाद्य मात्रग्रहणस्य फलमुद्घाट्यताम्।

१० तार्किकाणान्नये प्रथमान्तार्थमुख्यविशेष्यकश्शाब्दबोधो भवतीति सन्दूष्य वैयाकरणसिद्धान्तस्सम्यक् प्रदर्श्यताम् ।

११ अर्थनिबन्धनेयं संज्ञेति मतं मनोरमाशब्दरत्नाभ्यां सम्यगुपपादनीयम्।

१२ "धातूपस्थाप्यफलशालि कर्म"तिन्यास ईप्सितानीप्सितग्रहणाकरणलाघवमूलोऽपि कथन्त्याज्य इत्युच्यताम ।

१३ साक्षेपनिराकृति"दिवःकर्म च"इतिसूत्रं व्याख्यायताम् ।

१४ "दिवस्तदर्थस्ये" तिसूत्रे शेष इति सम्बध्यते नवेति सप्रमाणमुपन्यस्यताम् ।

१५"ज्ञोऽविदर्थस्य करणे" इत्याद्यष्टसूत्र्या दीक्षितोक्तफलान्युद्भावय ।

१६ आक्षेपनिराकरणपुरस्सरं"गोस्त्रियोरुपसर्जनस्य"इति सूत्रम् व्याख्याय स्वमतम्प्रतिपाद्यताम् ।

१७ समासान्तप्रत्ययविषये किन्दीक्षितेनोक्तं किञ्च शब्दरत्नकृतेति विशद्योपपाद्यताम् ।

१८ "पृथग्विने"तिसूत्रम्मनोरमोक्तदिशा व्याख्यायताम् ।

१९ आराद् वनादित्यत्र द्वितीयापञ्चम्योर्विधानसामर्थ्यादिति ग्रन्थो मनोरमाकृद्रीत्या व्याख्येयः ।

२० "कर्मणा यमभिप्रैती" तिसूत्रे दानस्येति प्रतीकमुपादाय;किमुक्तम्मनोरमाकृता । कथञ्च यत्तुमतन्दूषितमित्युपपाद्यताम् ।

इति प्रश्ना एव परीक्षासु समायान्ति

## प्रौढमनोरमाशब्दरत्नीय-

### अजन्तादिस्त्रीप्रत्ययावधिकप्रश्नानाम्

### उत्तराणि-

प्र० १—ननु समासेऽपि प्रत्ययान्ततदादिभिन्नत्वसत्त्वेन "अर्थवत्" सूत्रेणैव प्रातिपदिकत्वे सिद्धे "कृत्तद्धितसमासाश्च" इति सूत्रे समासग्रहणव्यर्थम् । नच राजकुमारीत्यत्र "स्त्रीप्रत्यये चानुपसर्जने न" इतितदादिनियमनिषेधात् तत्र पूर्वसूत्राप्राप्त्या तदर्थमेव समासग्रहणमिति वाच्यम् ? उक्तनियमस्य स्त्रीप्रत्ययमात्रग्रहण एव प्रवृत्तेः । अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति रीत्या पूर्वप्रवृत्तसमासीयप्रातिपदिकत्वस्य एकदेशविकृतन्यायेन भूतपूर्वगतेराश्रयणसम्भवाद् वा । असूर्यम्पश्येत्याद्यर्थमेव तदित्यपि न ? इह अर्थवदित्यनुवृत्तेः । "असूर्यललाटयोर्दृशितपोः" इति सामर्थ्यादेव संज्ञासिद्धेः । अनर्थकेषु च बौद्धेनार्थवत्त्वेनैवासमर्थसमासादौ सिद्धेः । इति न समासग्रहणस्य सार्थक्यसम्भवोऽपि तु नियमार्थत्वमेव । तथा हि यत्र संघात इति । अत्र पूर्वो भागः इत्यस्योपलक्ष-[illegible]णतया पूर्वभागप्रकृतिकप्रत्ययो नेत्यप्यर्थः । नातो जन्मवान्, बहुपटव इत्यादिषु दोषः । नचैवम् वृषण्वसुरित्यादिसमस्ते "वृषण्वस्वश्वयोः" इति पूर्वभागस्य भत्वेन तत्साजात्यात् पूर्वो भागः पदमित्यर्थासम्भवः, एवं गवित्ययमाहेत्यत्र गोशब्दस्य सुबन्तत्वाभावात् पदत्वाभावेन प्रातिपदिकत्वापत्तिरिति वाच्यम् ? प्रकृतिप्रत्ययभावापन्नसंघातविषयकत्वस्य नियमांशेऽङ्गीकृतेः । अत एव भाष्ये "अर्थवत्समुदायानां समासग्रहणं नियमार्थम्" अत्र षष्ठीतत्पुरुषे अर्थवदित्यस्य स्वातन्त्र्येण प्रयोगार्हार्थवदित्यर्थो ध्वनितः ।

प्रकृतिप्रत्ययभावापन्नत्वञ्चेह प्रत्ययविशिष्टत्वम् वै० च स्वान्तत्व स्वेतरस्वप्रकृतीतरस्वान्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरस्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतैकार्थीभावाश्रयेतरार्थवद्घटितत्वोभयसम्बन्धेनेति दिक् ।

प्र० २—"अचः परस्मिन् पूर्वविधौ" इति सूत्रे पूर्वविधावित्यत्र पूर्वस्माद् विधिरिति पञ्चमीसमासः । अत एव वेभिदिता इत्यत्रौपदेशिकैकाच्त्वेऽपि स्थानि-

वद्भावेनाल्लोपस्य "एकाच उपदेश" इतीण्निषेधो न । माथितिक इत्यत्र स्थानिवद्भावेनाकारस्य तान्तत्वाभावात् "इसुसुक्तान्तात् कः" इति कत्वन्न । अपीपचन्नित्यत्र च णिलोपादेः स्थानिवत्त्वेन "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुस् न भवतीति फलत्रयम्भाष्याभिमतम् । तत्र पञ्चमीसमासाभावेऽपि निर्वोढुं शक्यते तथाहि "एकाच उपदेशेऽनुदात्तात्" इत्यत्र विहितविशेषणत्वकल्पनयैवेण्निषेधाभावस्सिध्यति । एवम् मथितम्पण्यमस्येति विग्रहे "तदस्य पण्यम्" इति ठकी-कादेशेऽल्लोपस्य स्थानिवद्भावमन्तराऽपि ; कादेशाभावस्सिध्यति । "ठस्येक" इत्यनेनाकाररहितस्य ठमात्रस्यैवेकादेशविधानात् अल्विधित्वेन स्थानिवत्त्वाभावेनाकारविशिष्टे ठत्वस्यैव दुर्लभत्वेन कादेशविधायकस्याप्रवृत्तेः । अजादिसन्निपातेन जातस्य तान्तत्वस्य तद्विघातकादेशम् प्रत्यनिमित्तत्वाच्च । विदिसाहचर्यात् अभ्यस्तादपि लङ एव झेर्जुस्विधानादपीपचन्नित्यादावपि न दोषः । सिचा साहचर्याल्लुङः परस्यैव ग्रहणन्तु न ? कैयटाद्यनुरोधेन परसाहचर्यस्य बलवत्त्वात् इति मनोरमाकृतः । शब्दरत्नकारास्तु "नित्यः परयणादेशः परश्चासौ व्यवस्थया । युगपत् सम्भवो नास्ति बहिरङ्गेण सिध्यति" इति भाष्यानुसारेण पूर्वसाहचर्यस्यान्तरङ्गत्वमुररीकृत्य प्रत्यैपिपन्नित्यादिसिद्धये पञ्चमीसमासमङ्गीकुर्वते । द्वे इत्यनुवृत्त्यैवेष्टसिद्धौ "उभेऽभ्यस्तम्" इति सूत्रे उभेग्रहणसामर्थ्यात् उभे यत्र श्रूयेते तत्रैवेत्याद्यर्थेन ऐर्त्सन्नित्यादिसिद्धौ न प्रतिबन्धः । आयन्नित्यादिसिध्यर्थम् अपरविधाविति न्यासस्तु स्वविधेरपि संग्रहायावश्यक एव । "निष्ठायां सेटि" इति सूत्रे सेड्ग्रहणेन प्रविगणय्येत्यादिभाष्योदाहरणेन च पञ्चमीसमासस्यानित्यत्वाद् वारणान्न हे गौरित्यादावतिप्रसक्तिरिति ।

प्र० ३—"हल्ङ्याब्भ्यः" इतिसूत्रे प्रथमहल्ग्रहणाभावेऽपि संयोगान्तलोपेन राजेत्यादौ न दोष इति चेदत्रोच्यते, कृते संयोगान्तलोपे पश्चान्नलोपे कर्त्तव्ये संयोगान्तलोपस्य तद्दृष्ट्याऽसिद्धत्वेन नलोपो न स्यादिति प्रथमहल्ग्रहणम् । नच "न ङिसम्बुद्ध्योः" इति सम्बुद्धिग्रहणाज् ज्ञापकात् नलोपे कर्त्तव्ये संयोगान्तलोपासिद्धत्वन्न भवतीति सिद्धान्तान्न दोष इति वाच्यम् ? तथा सति गोमानित्यादावतिव्याप्तेः । नच ज्ञापकस्य साजात्यापेक्षत्वेन यत्र नकारविभक्त्योरानन्तर्यन्तत्रैवायन्नियम इति कल्पनया नातिव्याप्तिरिति वाच्यम् ? हे ब्रह्मन्नित्यादिनपुंसके सम्बुद्धिग्रहणस्य चारितार्थ्यात् । नच "सम्बुद्धौ नपुंसकानाम्" इति

वार्त्तिकेनैव तत् सिध्यतीति वाच्यम् ? तथापि अभिनोऽत्र इत्यादिसिद्धये हल्-ग्रहणस्यावश्यकत्वात् । न च हरिवो मेदिनन्त्वेति उत्वसिद्धये समाश्रितेन "संयोगान्तलोपो नासिद्धो रोरुत्वे" इतिवार्त्तिकेन नाभिनोऽत्रेत्यादौ दोषः, वस्वादिषु दत्वं सिद्धं वाच्यमिति रीत्योखास्रदित्यादीनामपि सिद्धेः, यङ्लुकश्छान्दसत्वेन अवर्वर्त इत्यादौ दोष इति वाच्यम् ? एवं सति प्रथमहल्ग्रहणाभावे ङी ई आ आबिति प्रश्लिष्य अतिखट्वो निष्कौशाम्बिरित्यादिसिद्धे दीर्घग्रहणाकरणेन ङ्याद्भ्यां साहचर्यात् सोरपि प्रत्ययस्यैव ग्रहणेनापृक्तग्रहणाकरणेन द्वितीयहल्ग्रहणाकरणद्वारा च लाघवात् "ङ्यापस्सोः" इति न्यासकरणे फलितार्थीभूते निरुक्तलाघवसम्भवेऽपि अनेकक्लेशापेक्षया तत्करणस्यैव श्रेयस्करत्वादिति संक्षेपतोऽनुसन्धीयते ।

प्र० ४—"ष्णान्ता षट्"इतिसूत्रे ष्णान्तेति स्त्रीलिङ्गनिर्देशेन विशेष्याकाङ्क्षितत्वेन पूर्वसूत्रादाकृष्टं संज्ञापरमपि संख्यापदमिह संज्ञिपरम् । तथाच मूलोक्तार्थस्साधीयान् भवति । पञ्चेत्यत्र नलोपे कृतेऽपि षट्संज्ञाम्प्रति नलोपस्यासिद्धत्वादित्यादिस्वपरग्रन्थविरोधात् उपदेशे षान्ता नान्ता चेत्यर्थस्तु प्राचीनोक्त उपेक्ष्य एव । शतानि सहस्राणीत्यादौ सन्निपातपरिभाषयैव निर्वाहे तथा व्याख्यानस्यानावश्यकत्वाच्च ।

एवमेव "बाधेऽदृष्टेऽन्यसाम्यात् किन्दृष्टेऽन्यदपि बाध्यताम्" इति न्यायेन काशिकाग्रन्थोऽप्युपेक्ष्य एव । देवदत्तस्य गुरुकुलमितिवत् समुदायेन सम्बन्धाच्चासमर्थसमासस्तथाचोपदेशकाले यौ षकारनकारौ तदन्तेत्यर्थोऽपि कैश्चिदुक्तो न सम्यक् ? ष्णान्तपदावयवेन षकारनकारेण सम्बन्धं व्याख्याय ष्णान्तसमुदायेन सम्बन्धादित्युक्तेः परस्परव्याघातापत्तेः । किञ्च सम्बन्ध्यंशे नित्यसापेक्षोपसर्जनपदस्यार्थद्वये शक्तिः "सम्बन्धिशब्दस्सापेक्षो नित्यं सर्वस्समस्यते । वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते"इत्यादिहरिरीत्या समासस्य निर्बाधत्वादिति ।

उपदेशकाले यौ षकारनकारा इत्युक्त्या अन्तशब्दस्यापि तथात्वाभावादिति । अन्तशब्दस्यावयविनि नित्यसाकाङ्क्षत्वेऽपि उपदेशकाले तथात्वाभावात् । अत एव न भवति ऋद्धस्य राजपुरुष इति । दर्शितञ्चैतन्मनोरमाकृताऽपि "किञ्च सन्तशब्दोऽवयविनि नित्यसाकाङ्क्षो नतु यत्र कुत्रापि"इत्यादिनेति दिक् ।

प्र० ५—ननु "अष्टनो दीर्घात्"इतिसूत्रे ह्रस्वे ऽन्तोदात्तव्यावृत्तं यथा स्या-

स्तथैति दीर्घग्रहणस्य पाक्षिकत्वज्ञापकत्वम्। तथाहि लाघवात् "अष्टस्य"इति वक्तव्ये कृतात्त्वानुकरणं व्यर्थं सत् जश्शसोर्विषये ऽप्यात्वं ज्ञापयतीति भावः। नच कार्यकालपक्षेऽष्टाभिरित्यादावात्वे कृतेऽषट्त्वेन"झल्युपोत्तमम्"इत्यस्याप्राप्त्या अष्टनूस्वरस्य चारितार्थ्येनाष्टभिरित्यत्र परत्वान्मध्योदात्ते कृते सकृद्गतिन्यायेन पुनरष्टनूस्वरस्याप्रवृत्त्या दीर्घग्रहणमव्यर्थमेवेति वाच्यम्? तेनोक्तन्यायानित्यत्वस्यैव यथोद्देशपक्षस्यैव वाऽत्र ज्ञापनात्। नच "चतुरः शसि" इतिसूत्रस्थभाष्यप्रामाण्येन षट्स्वरस्य विहितविशेषणत्वानुसन्धानेन गौणे समासेऽप्रवृत्त्या प्रियाष्टाभ्यामित्यादावष्टनूस्वरः सावकाशः, अन्यथा हलादिग्रहणस्य प्रियाष्टान इत्यादिव्यावृत्त्यर्थत्वेन "नह्यन्यत्"इत्यादिभाष्यासङ्गतिः। अष्टौ परमाष्टावित्यादौ त्वेकादेशस्वरेणैव सिद्धिः। कदष्टावित्यादि तु नाभिधेयमिति वाच्यम्? दीर्घग्रहणज्ञापकतापरभाष्यप्रामाण्येन विहितविशेषणत्वाश्रयणद्वाराऽष्टनूस्वरस्यापि गौणे समासेऽप्रवृत्तिकल्पनात्। "चतुरःशसि"इतिसूत्रस्थवार्त्तिकन्तु "तिसृभ्यः" इतिसूत्रस्थवार्त्तिकवदेव दूष्यमिति।

प्र० ६—अत्र अजादिगणे शूद्रा इत्येव पठितव्यम्, पुंयोगे शूद्रस्य स्त्रियां लाक्षणिकत्वरूपगौणत्वेन गौणमुख्ययोर्मुख्ये सम्प्रत्ययन्यायेन टाप् न स्यादिति जातिग्रहणमपि व्यर्थम्। एवञ्च जातिलक्षणो ङीषेवानेन बाधिष्यत इति। एवम् नृपाच्छूद्रायामुत्पन्नोग्रजातिकन्यायां ब्राह्मणादुत्पन्नाभीरजातिवाचकमण्डपादिशब्दवद् रूढत्वापन्नमहाशूद्रशब्दघटकशूद्रशब्दस्यानर्थकत्वेन तदर्थसमवेतस्त्रीत्वाभावेन टापोऽप्रसक्तेर्महत्पूर्वग्रहणमपि न कार्यम्। अत एव स्मृतौ "शूद्रसधर्माणस्ते" इत्याद्युक्तं सङ्गच्छतेतराम्। महतोशूद्रेति विगृह्य तु महाशूद्रेति टाबन्तमिष्यते एवेति मूले। शब्दरत्नकारास्तु शक्यतावच्छेदकारोपस्वरूपा लक्षणा द्विधा गौणी शुद्धा चेति। तत्र आरोपे सादृश्यसम्बन्धमूलाऽऽद्या, सादृश्येतरसम्बन्धनिमित्ता द्वितीया। इह च सादृश्यसम्बन्धमूलत्वाभावेन पदकार्यत्वाभावेन च गौणमुख्यन्यायाप्रवृत्त्या टाब्वारणायाजादिरिति। अत एव अजस्य स्त्री अजेति भवति। एवम् शूद्रसमानधर्मकत्वमाभीरेऽप्यारोप्य शूद्रत्वेन महाशूद्रघटकशूद्रशब्दस्य प्रयोगात् अर्थवत्त्वे तदर्थसमवेतस्त्रीत्वस्य सत्त्वात् तदन्तविधिज्ञापनद्वारा टापःप्रवृत्त्यापत्तौ तद्वारणायामहत्पूर्वग्रहणमप्यावश्यकमेवेति। अत एव ब्राह्मणक्षत्रियवैश्यैः क्षत्रियासु वैश्यासु शूद्रासु चोत्पन्नाः क्षत्रियवैश्यशूद्रा एवेत्यादयः अनुलोमसङ्करेषु मा-

डी. सी. ओ.



त्तगतजात्यारोपेणैव तत्र२ स्मृतयोऽपि सङ्गच्छन्तेतराम् । अत एव "आभीरी तु महाशूद्री"इति कोशोऽपि समनुविधेय इति दिक् । 43

प्र० ७—भाष्यशरीत्या प्रत्याख्यानं सूत्रसत्त्वं वा युक्तमिति समाशङ्क्यै-वाह यथोत्तरम्मुनीनाम्प्रामाण्यमिति । सूत्रापेक्षया वार्त्तिकमतम् वार्तिकापेक्षया च भाष्यमतम्प्रबलमिति तदर्थः । अत्र प्रमाणन्तु "धिन्विकृण्व्योर च"इतिसूत्रेणा-त्वविधानमेव । अन्यथा वलोपविधानेनैव सिद्धेः । पुरा तु अल्लोपस्य स्थानिवत्त्वेन गुणनिषेधो जायते ।

नच वलोपविधानेऽपि "न धातुलोप" इति गुणनिषेधस्सिद्ध इति वाच्यम् ! तत्प्रत्याख्यानपक्षे गुणप्राप्तेः । एतेन सूत्रमतात् प्रत्याख्यानवादिमतम्प्रबलम् इति प्रत्याख्यानवादिसम्मतलक्ष्यमेव कथञ्चित् सूत्रमतेऽपि साध्यन्नतु विपरीतं सम्भवे । अन्यथा सूत्रमप्रमाणमेवेति च प्रत्याख्यानं सूत्रसम्मतमि ति । सूत्रकृत्खण्डितप्राची-नर्षिवाक्यानामप्रामाण्यवत् सूत्रकारवचःखण्डनप्रवृत्तभाष्यवार्त्तिकवचनैस्तदंशे सूत्र-कारवचसोऽप्यप्रामाण्यकल्पनैवोचितेति दिक् ।

प्राञ्चस्त्वत्र–बहुव्रीहौ सर्वादेः सर्वनामता न स्यात् प्रियसर्वाय । सूत्रकारमते बहुव्रीहौ न सर्वनामता, भाष्यकारमते गौणत्वमात्रे । त्वत्कपितृक इत्यादौ युष्म-दादेःसर्वनामत्वेनाङ्गकार्यत्वेन प्राप्तोऽकच् माभूत्किन्तु क एवेति तदर्थमिदं सूत्रं न्यासकारसम्मतमिति तन्न ! तत्र बहुव्रीहौ संज्ञा नेति विवक्षिते "समासावयवयोर्यु-ष्मदस्मदोरि"त्युत्तरग्रन्थविरोधापत्तेः । तदवयवानां सर्वादीनामिति विवक्षिते तु समुदाये प्राप्तिविरहात् समुक्ताच्च । यत्तु त्वत्कपितृक इत्यादि तत्र त्वं पिता यस्येत्यादि विगृह्य बहुव्रीहिसमासे कृते समासान्तःपातिनो युष्मदादेः सर्वार्थवाचकत्वे-न सर्वनामसंज्ञकत्वेनाज्ञाताद्यर्थविवक्षायाम् "अव्ययसर्वनाम्नाम्" इत्यकच्प्रसङ्गः । तस्य चाङ्गाधिकारीयत्वाभावेनाङ्गसंज्ञानपेक्षत्वात् ।

एवम् समुदायो हि विशेषे वर्त्तते पूर्वपदन्तु सर्वा ताया अनपेतमेवेति न्यास-कृत्कल्पनम् । तत्सर्वमुपेक्ष्यम् तथाहि जहत्स्वार्थायां वृत्तौ समासावयवयोरर्थ एव नास्ति, अजहत्स्वार्थायामपि स्वार्थविशिष्टान्यपदार्थवृत्तित्वेनोपसर्जनत्वं स्पष्टमेवे-त्याद्दिदूषणैः ।

यदपि विग्रहवाक्ये प्राप्ता संज्ञा निषिध्यत इति तदपि कैयटग्रन्थविरोधात् स्वोच्यमानप्रतिज्ञाविरोधाच्च न मान्यम् ।

अत एव भाष्ये—"अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गम्मुक्तसंशयौ" इत्याद्युक्त्वा त्वकत्पितृक इत्यादिरूपाणामिष्टापत्तिं कृत्वा सूत्रमिदम्प्रत्याख्येयमिति ।

प्र० ८—यूषन्शब्दात् शसि यूष्ण इत्यत्र णत्वसम्पत्तये "पूर्वस्मादपि विधौ स्थानिवद्भाव इति पक्षे तु अड्व्यवाये इत्येवात्र णत्वम्" इत्युक्तम् । इति पक्षेत्विति प्रतीकमादाय मनोरमायां "एतेन पञ्चमीसमासस्य पाक्षिकत्वन्ध्वनयति तथाहि—भाष्ये वेभिदिता माथितिकः अपीपचन्निति प्रयोजनत्रयमुक्तन्तच्चान्यथासिद्धम् । इत्यादि प्रपञ्चनीयम् प्रपञ्चितन्द्वितीयप्रश्नोत्तरादिति ।

प्र० ९—खट्वामतिक्रान्तोऽतिखट्व इति समस्तातिखट्वशब्दात् ङे विभक्तौ यादेशे दीर्घे अतिखट्वायेत्यत्र स्थाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वञ्चाश्रित्य "याडापः" इति सूत्रेण याट् प्राप्नोति । नचैवं लाक्षणिकत्वेन लक्षणप्रतिपदोक्तपरिभाषया याटो वारणं सम्भवतीति वाच्यम् । तत्तदतिदेशविषये परिभाषाया अस्या अप्रवृत्तिज्ञापनात् । अन्यथा तत्तदतिदेशानां वैयर्थ्यापत्तेः । तथा च आबन्तं यदङ्गमिति व्याख्ययैव वारणीयम् ।

नच अत्र "याडापः" इतिसूत्रं व्याचक्षाणानाम् प्राचाम् "अयमकारो लाक्षणिक" इति मतम्, सूत्रन्तु निद्रायै इति सिद्धये चरितार्थमिति वाच्यम् । यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैवात्र लाक्षणिकत्वम् इति नेह तथा, एकादेशतः प्रागपि तत्सत्त्वात् इति सर्वमयुक्तमेव । वर्णग्रहणे लाक्षणिकपरिभाषाया अप्रवृत्तेस्तैरप्युक्तत्वादिति ।

अतिसर्वायेत्यत्र तु न स्याडापत्तिः । संज्ञोपसर्जनीभूतानामप्रतिषेधो वक्तव्य" इत्यनुशासनात् सर्वनामत्वासत्त्वेन 'सर्वनाम्नःस्याट्" इति सूत्राप्रवृत्तेस्साधूपपाद्यत्वात् । तस्मात् प्राञ्चोऽत्रोपेक्षणीया एव ।

प्र० १०—पदान्ते झलि च यः संयोगस्तदाद्योः स्कोर्लोप इत्यर्थक "स्कोः संयोगाद्योरन्ते च" इति सूत्रोदाहरणकाले जकारान्तोदाहरणे विवदमानाः प्राञ्चोऽवया इति प्रतीकमुपादाय ण्विनिति व्याचक्षते तन्न ? ण्विडसोश्चत्सर्गापवादभावेनापवादस्य डसो विषये ण्विनोऽप्रवृत्तेः ।

अत्र शब्दरत्नकाराः—ननु पदान्तांशे "वाऽसरूपोऽस्त्रियाम्" इति पाक्षिको ण्विन्नप्यास्तां रुप्रकरणेऽवया इति पाठेनोभयोरेवैतन्निपातसत्त्वात् । अन्यथा "ससजुषो रुः" इति रुत्वे सिद्धे दीर्घमात्रस्यैव निपात्यमानत्वापत्तेरिति चेन्न ? "डस्

वक्तव्यः, किम् प्रयोजनम्, वर्थम् क्रियते वर्थनिपातनम् अवयाः श्वेतवा इति, तन्न वक्तव्यम्"……"श्वेतवोभ्यामित्यर्थम्" इति भाष्यविरोधात् । तस्मादत्र वार्त्तिक-सिद्धान्ते वासरूपन्यायो न प्रवर्त्तते । एवञ्च क्तादिष्विवात्रापि व्यवस्थितविभाषा-ऽङ्गीकार्या । तत्प्रकरणे सूत्रन्तु सूत्रकृता श्लोऽकरणात् कृतम् ? णिजन्ते रुत्वमात्र-स्यैव तदिष्टत्वात् । श्वेतवोभ्यामिति प्रयोगमजानानेनाकारि सूत्रकृता सूत्रम् ।

परे तु "श्वेतवहादीनां डस् पदस्य" इति वार्त्तिकबलेन वृत्तिकाररीत्या व्या-ख्यायात्र वासरूपन्यायाप्रवृत्तिं योजयन्तितरामिति किमधिकेन ।

प्र० ११—ननु "साम आकम्" इति शास्त्रे सुड्ग्रहणं सुट्साहित्यावच्छिन्न-स्यास आकमिति नाम्नो विशेषणं किन्तूपलक्षणतया यस्यामोऽग्रे सुड् भावी तस्यै-वाम आकमादेशं बोधयति । अन्यथाऽऽकम्विधानकालेऽन्त्यलोपाभावेनाप्राप्ते-स्सुट उद्देश्यत्वाप्रसिद्धेः । एवञ्च गौणे सुटः कदापि सत्त्वासम्भवेन कथमाकमतित्वा-कमित्यत्रेति । नच स् चाम् चेति समाहारद्वन्द्वेनाम्समभिव्याहारे युष्मदस्मद्भ्याम् परस्य सुट्साहित्यस्य सम्भवेन स्शब्देन च सुट एव ग्रहणात् गौणेऽपि नाव्याप्ति-रिति वाच्यम् ? असामर्थ्यात् समासस्यैवाप्रवृत्तेः । आकमाऽपहृतस्यामः सुडन्वया-सम्भवात् । नच स्वसम्भावितागमिस्थानित्वरूपपरम्परासम्बन्धेन स्थान्युपलक्ष-कन्तदिति वाच्यम् ? युष्माकमित्यादौ सुटः श्रवणप्रसङ्गात् । साम इति निर्देशाच्च तद्वारणं शक्यते कर्त्तुम् ? गौणव्यावृत्त्यर्थंन्त्वन्मते तन्निर्देशस्य चारितार्थ्यसम्भवात् । समाहारद्वन्द्वोपक्रमेऽन्वाचयशिष्टत्वे दूषणाभिधानमप्ययुक्तमेव । साहित्यविवक्षया केवलस्याप्रसक्तिरित्यपि न शोभते ? अतीतानागतयोरयन्द्रष्टेतिवत् सुडामोरेकज्ञान-विषयत्वसम्बन्धेन समूहालम्बनाभ्युपगमात् । एवञ्च मुख्ये सुड्विशिष्टस्याकम् गौणे चाम एवाकमिति ध्येयम् । "अक्षाणां तन्त्रिणां तन्त्रे उपायस्तुल्यरूपते"ति अभियुक्तोक्तेस्तन्त्रेऽपि साम्यस्यैव निदानत्वेन साम्पदे सछट्कस्यामः आमश्चाक-मित्येव तन्त्रेण निर्वाह इति वक्तुमप्यसम्भवम् ? साम्पदस्याम्पदासाम्यात् तन्त्रा-प्रवृत्तेः ।

एवञ्च आमि साम्त्वारोपेणाकमस्सिद्धिः । अत एव भाष्ये "अतित्वाकम्" इत्यत्राकम्सुडभावौ सिद्धौ । मूले वस्तुतस्तु इत्यारभ्य सिध्यतीत्यन्तो ग्रन्थः स्वरूपव्याक्रियेव पराक्रियान्यायेन प्रसादकृन्मते दोषोद्भावनायेति विचिन्तनीयम् ।

प्र० १२—"शूद्रा चामहत्पूर्वा जातिः" इत्यत्रामहत्पूर्वग्रहणं किमर्थं कथञ्च

तत्फलं साधीयो भवतीत्यादि सविस्तरं षष्ठ ६ प्रश्ने निरूपितमिति तत्तत एवानुसन्धाय "इन्द्र वरुण" इत्यत्रानुग्विधानप्रयोजनं विलेख्यम्। तथाहि—अत्र सूत्रे अनुग्विधानेनैव इन्द्राणीत्यादीनां सिद्धिसम्भवे दीर्घोच्चारणसामर्थ्यात् आ अनुगिति च्छिद्यते। एवञ्चाकारविधानसामर्थ्यात् क्वचिदन्यतोऽपि तेन ब्रह्माणीति सिध्यति। तदेतच्चिन्त्यमेव, अनुग्विधाने "अतो गुणे" इति पररूपापत्तेः। नच नुक्येव विधेयेऽकारोच्चारणसामर्थ्यान्न पररूपमिति वाच्यम्? "अल्लोपोऽन" इत्यस्य बाधेन तच्चारितार्थ्यात्।

नच "पत्युर्न" इतिवदादेशे कर्त्तव्ये आगमलिङ्गककारोच्चारणसामर्थ्यादेव नाल्लोपो भविष्यतीति वाच्यम्? "न संयोगात्" इति निषेधविषये लोपाप्रसक्त्या शर्वशब्दे ककारस्य चारितार्थ्यात्। तस्मात् ककाराकारयोः सामर्थ्याभावेन पररूपबाधनार्थं दीर्घोच्चारणस्यावश्यकत्वात्। एवञ्च ह्रस्वादिरेव लाघवाद् वक्तव्य इति वदन्तो हरदत्ताचार्या अपि परास्ता एवेति संक्षेपः।

प्र० १३—"जातेरस्त्रीविषयात्" इति सूत्रे जात्या स्ववाचकशब्दो लक्ष्यतेऽर्थे कार्यासम्भवात्। स्वरूपग्रहणन्तु न भवति? तथा सत्यस्त्रीविषयादित्यादेर्वैयर्थ्यापत्तेः। एवञ्च मूले जातिवाचि यदिति। अत्र जातपदार्थान्निरूपयता भट्टोजिदीक्षितेन पूर्वम् "आकृतिग्रहणा जातिः" इति लक्षितम्। ग्रहणमिति करणे ल्युट् सामान्ये नपुंसकम्, आकृतिर्ग्रहणं यस्या इति बहुव्रीहिसमासे अनुगतसंस्थानव्यङ्ग्येत्यर्थः फलति। नच वृषलीत्यादौ वृषले ब्राह्मणादिव्यावृत्तसंस्थानाभावाल्लक्षणस्याव्याप्तिमिति वाच्यम्? अत एव "लिङ्गानाञ्च न सर्वभाक्, सकृदाख्यातनिर्ग्राह्या" इति लक्षणान्तरकरणात्। अत्र चकारो भिन्नक्रमो निर्ग्राह्यानन्तरं योजनीयः। एवञ्च असर्वलिङ्गत्वे सत्येकत्र व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनमन्तराऽपि सुग्रहत्वं जातेर्लक्षणम्। वृषलीत्यादावपि समन्वयसम्भवात्। नचैवमपि वृषलत्वादिजातिवत् देवदत्तत्वादेरपि जातित्वमापद्येतेति वाच्यम्? स्वाधिकरणकालवृत्तित्वसम्बन्धेन व्यक्त्यन्तरविवक्षणात्। तथाच यस्यां व्यक्तौ यत्र काले देवदत्तत्वं कथ्यते तत्र तत्समकालमन्या देवदत्तव्यक्तिरप्रसिद्धैवेति न दोषः। वृषलत्वादिस्तु भवत्येव, तदीयपितृभ्रात्रादिषु तस्य सुग्रहत्वात्। एवम् "गोत्रं च चरणैस्सह" इत्युक्तया "एको गोत्रे" इति भाष्यानुरोधेनेह पारिभाषिकगोत्रस्यत्र जातित्वमिति। एवञ्च प्रथमलक्षणस्य यद्धर्मपुरस्कारेण प्रत्ययस्यानेकावगाहित्वन्तत्त्वमिति निष्कर्षः।

द्वितीयस्य तु नित्यत्वे सत्येकत्वे सति समवायसम्बन्धेनानेकवृत्तित्वमिति ।

एकत्वञ्चेह सजातीयविजातीयरहितत्वम् । स्वसामानाधिकरण्य स्वाभाव-सामानाधिकरण्य स्वसमानाधिकरणाभावप्रतियोगित्व स्वावृत्तिजात्यभाववत्त्वमित्ये-तच्चतुष्टयसम्बन्धेन स्वविशिष्टं यत् तत्सामानाधिकरण्याभाववत्वम् निष्कृष्टम्भव-तीति केचित् ।

"वोतो गुण" इत्यत्र किं गुणत्वमिति ग्रन्थे नोक्तं किन्तूपरिष्टादनुसन्धेयम् । तथाहि "संज्ञाजातिक्रियाशब्दान् हित्वाऽन्ये गुणवाचिनः" जातिगुणक्रियासंज्ञा-शब्दानां चतुष्टयी प्रवृत्तिरिति भाष्यानुसारेण "सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" इति भाष्यानुसारेण च द्रव्य-भिन्नत्वे सति नित्यानित्यवृत्तिपदार्थविभाजकोपाधिमत्त्वम् गुणत्वम् गुणत्वजाति-मत्त्वं वेति विशेषतोऽन्यत्र तत्त्वबोधिन्यादौ द्रष्टव्यम् ।

प्र० १४—"अर्थवदधातुरप्रत्ययः प्रातिपदिकम्"इत्यत्र अर्थविषयकबोधज-नकत्वमर्थवत्त्वम्, तच्च प्रत्ययस्याप्यस्तीति प्रत्ययपर्युदासः करणीयो भवति । अत एव वृत्तिमत्त्वमर्थवत्त्वम् वृत्तिश्च शक्तिलक्षणाऽन्यतररूपा शक्तिर्बोधकतारूपेति लक्षणाऽपि तद्रूपैव । नान्यथा "सति तात्पर्ये सर्वे सर्वार्थवाचकाः" इति भाष्यस-ङ्गतिः । उत्तरसूत्रे "अर्थवत्" इत्यनुवर्तते सामर्थ्याच्च तदन्तत्वम् "कृत्तद्धितान्त-श्चैवार्थवन्न केवलाः कृतस्तद्धिता वा" इति "सुप्तिङन्त" सूत्रभाष्यात् । एवञ्च तत्र शब्दाधिकाराश्रयणात् प्रशंसायाम्मतुप्स्वीकारेण एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वमर्थवत्त्वम् ।

अत एव "धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते" इति हरिकारि-कापि सङ्गच्छतेतराम् । अत एव च "शास्त्रीयार्थग्रहणेऽर्थवद्ग्रहणानुवृत्तिवैयर्थ्येन तदनुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते" इति कैयटोक्तिरपि सङ्गता ।

प्राशस्त्यार्थकमतुब्बलाद् यस्य प्रातिपदिकत्वञ्चिकीर्षितन्तन्मात्रवृत्तिरेवैका-र्थीभावो ग्रहीतव्यः । तथाच न पञ्चनावप्रिय इति समासघटकपञ्चनावेत्यस्य प्राति-पदिकत्वेन टाप् । अलौकिकवाक्यीयकार्थीभावस्य लुप्तकिबन्तेऽप्यारोपेण न क्वचिद् दोष इति प्राञ्चः । नव्यास्तु सूत्रद्वये विभिन्नार्थवत्त्वस्वीकारेऽर्थवत्त्वद्वयोपस्थिति-द्वयस्य विभिन्नरूपेण बोधद्वयम्प्रति कारणता वक्तव्येति कार्यकारणभावे गौरवम् ।

किञ्च प्रत्ययमात्रे संज्ञावारणाय प्रत्ययप्रत्ययान्तपर्युदासे गौरवम् । किञ्च समासैकदेश-पञ्चनावेत्यस्य प्रातिपदिकत्वद्वारकटाब्वारणाय च "यस्य प्रातिपदिकत्वञ्चिकीर्षितन्तन्मात्रवृत्तिरेकार्थीभावोऽत्र ग्राह्यः" इति कथने सुमहद् गौरवम् । तथा चानेकविधगौरवापेक्षया लाघवादुभयत्रैकविधमेवार्थवत्त्वम् वक्तव्यञ्च "एतत्संज्ञाफलभूत-विभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमि"ति ।

एतस्यार्थवत्त्वेन विवक्षितस्य या संज्ञा प्रातिपदिकसंज्ञा तत्फलभूता या विभक्तिस्स्वादिस्तदितरो यो टटादिस्तदनपेक्षया शक्तिलक्षणान्यतरज्ञानाधीनोपस्थित्या लोकेऽर्थेविषयकबोधजनकत्वमित्यर्थः । विभक्तिपदस्य च प्रत्ययपरत्वेन न रमा गौरीत्यादौ एतत्संज्ञाफलभूतविभक्तीतरटाबाद्यपेक्षत्वेनार्थवत्त्वविघातः । इन्द्राणीत्यादौ प्रत्ययेतरोनुगागमसमभिव्याहृत्यपेक्षबोधकत्वेन तत्वानापत्त्या विभक्ति|पदत्यागेऽपि न हानिः ।

एवञ्च यस्यार्थवत्त्वं वक्तव्यं तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयपूर्वपदेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वमिति निर्दुष्टः पन्थाः । अतोऽधिकं शेखरे न्यरूपि ।

परे तु—शक्तिविशिष्टत्वन्तत्त्वम् वै० च स्वपर्याप्तत्व स्वजन्यबोधविषयत्वप्रकारकववतृतात्पर्यीयविशेष्यतापर्याप्त्यधिकरणत्वोभयसम्बन्धेन । तथाच न कापि दोष इति वदन्ति ।

यद्यपि अधातुरिति पर्युदासबलेनैवार्थवत्त्वं लभ्यते तथाप्युत्तरार्थमर्थवद्ग्रहणं कर्त्तव्यम् । इह किञ्चित्त्रपो इतीतिन्यायेनेह करणस्य मनिवयुक्तन्यायानित्यत्वज्ञापनेन चारितार्थ्याच्च । नचार्थवद्ग्रहणाभावेऽपि धनं वनमित्यादौ न प्रतिवर्णं संज्ञाऽपद्यते,संख्याद्यभावादेव च न सुबुत्पत्तिरिति वाच्यम् ! एकवचनमुत्सर्गतः करिष्यत इति भाष्यसिद्धान्तेन एकवचनोत्पत्तेस्तथापि दुर्वारत्वात् । नच तथापि समुदायस्यापि प्रातिपदिकत्वे तदवयवानां वर्णानामपि प्रातिपदिकत्वे "सुपो धातुप्रातिपदिकयोः" इति सुब्लुकि न दोष इति वाच्यम् ! एवमपि पदत्वनिमित्तकानाञ्च लोपादीनान्तत्र दुर्वारत्वात् । वस्तुतस्तु दशदाडिमानि षडपूपा इति निरर्थकसमुदाये प्रातिपदिकत्वद्वारक "सुपो धातु" इति लुग्वारणायार्थवद्ग्रहणाच्च इति संक्षेपः ।

प्र० १६—उभशब्दो द्वित्वविशिष्टस्य वाचकोऽत एव नित्यन्द्विवचनान्तः ।

नन्वेवम् सर्वनामसंज्ञाप्रयुक्तस्मैसुडादीनामभावेन सर्वनामसंज्ञाया निष्फलायमानत्वेन "सर्वादीनि" इति सर्वादिगणे उभशब्दस्य पाठो व्यर्थ इति चेन्न ? उभाभ्यां हेतुभ्यामुभयोर्हेत्वोरित्यत्र "सर्वनाम्नस्तृतीया च" इति पाक्षिकतृतीयाविधानमेव फलमिति कथनात् । न च "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति वार्त्तिकेनैव तदर्थसिद्धेर्न फलमिति वाच्यम् ? उभकावित्यकजर्थन्तत्पाठस्यावश्यकत्वात् । नच कप्रत्ययेन तत्सिद्धमिति वाच्यम् ? उभयपक्षविनीतनिद्रा इत्यादावयच्सिद्धये समाश्रितेन "उभादुदात्तो नित्यम्" इति सूत्रे "नित्यम्" इति योगविभागेन उभशब्दाद् वृत्तिविषये नित्यमयच् स्यात् स्वार्थे इत्यर्थकेन कप्रत्ययेऽप्ययच्प्रसङ्गात् । तथाकच्यप्ययचः प्रसङ्गो दुर्वारः । योगविभागस्येष्टसिद्ध्यर्थतया "उभौ साभ्यासस्ये"ति निर्देशेन च यत्र द्विवचनं न श्रूयते तत्रैवायमिति व्याख्यानात् । अत एव वार्त्तिकम् "अन्यथाभावो द्विवचनटाब्विषयत्वात्" इति । तत्राकच "तन्मध्यपतित" न्यायेनोभशब्दस्य द्विवचनपरत्वञ्च विहन्यते के तु विहन्यत एव ।

भाष्ये तु स्वार्थविहितकप्रत्ययस्यापि द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधविषयार्थानुवादकत्वेन द्विवचनत्वम् । अतसिलौ तु विभक्त्यन्तस्य स्वार्थे विहिताविति तयोः कारकशक्तिप्रधानत्वेनोक्तद्विवचनत्वाभावात् । कस्य त्वज्ञाताद्यर्थविशिष्टोभार्थे विधानेन तत्त्वमक्षतमेवेति तदाशयः । उभयो मणिरित्यादावप्रवृत्तये चास्य "लिट्यभ्यासस्योभयेषाम्" इत्यनित्यत्वज्ञापनात् ।

नन्वेवमपि "उभयोऽन्यत्र" इति वार्त्तिकस्य उभयेति यस्स्वार्थिकायजन्तः सोऽन्यत्र प्रयुज्यते नतु द्विवचनपरत इत्यर्थः कथमिति चेन्न ? अनभिधानात् ततो द्विवचनन्नोत्पद्यत इति तात्पर्यात् । अत एवास्यासर्वविभक्तिकत्वेनाव्ययत्वे प्राप्ते "तद्धितश्चासर्वविभक्तिः" इति सूत्रे "कृत्तद्धितानां ग्रहणञ्च पाठे" इति भाष्यं कैयटेनावतारितम् ।

अत एव भाष्ये उभयो मणिरुभये देवमनुष्या इत्येवोदाहृतम् । पचतिकल्पम्पचतिरूपमित्यादौ वारणार्थरूपाठस्योपक्षीणत्वेनानभिधानकल्पने मानाभावादस्तीति हरदत्ताचार्यः ।

वस्तुतस्तु—यदागमपरिभाषयोभशब्दग्रहणेनोभकग्रहणेऽपि सिद्धे उभशब्दस्यपाठो व्यर्थ एव । चरकग्रन्थे भगवता पतञ्जलिना "यश्चोभयाभ्याम् मार्गाभ्याम्"इति उभयशब्दस्य द्विवचनमपि भवतीति बोध्यम् ।

प्र० १६—अस्योत्तरं ७ सप्तमप्रश्नोत्तरेणैव प्रायस्तुल्यम् ।

प्र० १७—ननु "पूर्वत्रासिद्धम्" इति सूत्रेणैव राजभ्यामित्यादौ दीर्घादिषु कर्त्तव्येषु नलोपविधायकस्यासिद्धत्वादेव निर्वाहे तदर्थम् "नलोपस्सुप्स्वर"इति सूत्रमपूर्वं व्यर्थमिति चेन्न ? अस्य नियमार्थत्वात् । एष्वेव नलोपोऽसिद्धो नान्यत्र तेन राजाश्व इत्यादावसिद्धत्वाभावेन दीर्घसिद्धिः ।

नियमशास्त्राणां निषेधमुखेन विधिमुखेन च प्रवृत्तिर्भवति । तत्र विधिमुखेन प्रवृत्तिरिति सिद्धान्तः । तत्र प्राप्तस्य पुनर्विधानसामर्थ्येन सामान्यशास्त्रीयोद्देश्यतावच्छेदके तदितरत्वेन सङ्कोचो भवति । यथा "कृत्तद्धित" इत्यत्रार्थवत्पदेऽर्थवत्समुदायाग्रहणरूपः । एवम् "नलोपविधौ"पूर्वत्रासिद्धम्"इत्यस्याप्रवृत्तिरूपः । नचैवम् भाष्यादिसम्मतो नियमशास्त्रे प्रतिषेधत्वव्यवहारो न भवेदिति वाच्यम् ? कृते सङ्कोचे फलितार्थरूपेण तथा व्यवहृतेः ।

अत एव"पञ्च पञ्चनखा भक्ष्या"इति भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते इति भाष्यम् । पतिघटितससामान्तसमासाविषयकत्वरूपसङ्कोचो माभूदित्येतदर्थम् "पतिस्समास एव"इत्यत्रैवकार इति ।

निषेधमुखेन प्रवृत्तिस्वीकारे च स्वीयोद्देश्यतावच्छेदकधर्मावच्छिन्नस्य तदतिरिक्ते स्वीयोद्देश्यतावच्छेदकव्यापको व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यो यो धर्मस्तदवच्छिन्नरूपे भवतीत्यस्य न भवतीत्यर्थेन च लाक्षणिकत्वेन तेषां निषेधकत्वम् । यथा सुबादिपदस्य स्वव्यतिरिक्तविधौ भवतीत्यस्य न भवतीत्यर्थे लाक्षणिकत्वेन "नलोपः सुप्"इत्यनेन तद्व्यतिरिक्तविधौ कर्त्तव्ये नलोपविधावनुवर्त्तमानपूर्वत्रासिद्धत्वस्य निषेधः । अतएवात्र पक्षे सुबादिविधौ नलोपासिद्धत्वरूपस्वार्थस्य हानिः, तद्व्यतिरिक्तविधौ प्राप्तस्य नलोपासिद्धत्वस्य बाधः, नलोपोऽसिद्धो नेति परार्थकल्पनेति दोषत्रयम्मीमांसकैरुच्यते । एवञ्च लाघवाद् विधिमुखेन प्रवृत्तिरेव युक्ता । रूढ्यन्यलक्षणा फलवतीति नियमात तदभावे लक्षणाया अनुचितत्वाच्च ।

यद्यपि च "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते"इत्युक्त्या नियमस्य परिसंख्यातो भेदस्तथापि "पंच पंचनखा"इत्यस्य भाष्ये नियमत्वेन व्यवहारात् अन्यनिवृत्तिरूपफलैक्याय च शब्दशास्त्रे नियमपदेन परिसंख्याया ग्रहणस्यापि योग्यत्वात् । नियमत्वञ्च शास्त्र-

विशिष्टत्वम् वै० च स्वीयोद्देश्यतावच्छेदकव्याप्यधर्मावच्छिन्नोद्देश्यताकत्व स्वीयविधेयतावच्छेदकधर्मावच्छिन्नविधायकत्वमित्युभयसम्बन्धेन ।

प्र० १८—अत्र "प्रत्ययस्थात" इति सूत्रे कादित्यत्राकारस्योच्चारणार्थकत्वेन व्यञ्जनमात्रस्य तेन विवक्षितत्वेन एतिका गच्छन्तीत्यादावकचि सत्यपीत्वसिद्धिः। अकचः ककारस्य चोच्चारणार्थत्वमवश्यम्पचतकीत्यादिसिद्धये विवक्षणोयम् इत्याशयेनाह प्रत्ययस्थककारादित्यादिना । प्रत्ययस्थात् किं शक्नोतीति शका, कार्त्तिक नन्दना, अतः किन्नौका, आपि किं कारकः असुपः किम् बहुपरिव्राजका नगरी ( अन्वर्वत्तिविभक्त्या च सुपः परत्वम् ) आपि पर इति अकारस्य विशेषणम् । अत एव ककाराकाराभ्यां व्यवधानेऽपि प्रवृत्तिः अनेकव्यवधानाच्च न रथकट्येत्यादौ प्रवृत्तिः । एनिकेत्यादौ च श्रौताव्यवहितत्वमादायेत्वप्रवृत्तिः । नातः "अचः परस्मिन्" इति स्थानिवद्भावेनाकारव्यवधानप्रयुक्ताप्रवृत्तिशङ्कापि । अत एव च "न यासयोः" इति चरितार्थम् । चाहरथकट्येत्यादावतिप्रसङ्गात "आपीति ककारविशेषणम् सर्विकेत्यादौ स्थानिवत्त्वेन व्यवधानेऽपि श्रौताव्यवधानमाश्रित्य वचनसामर्थ्यात् प्रवृत्तिः"इति प्राचां ग्रन्थोऽयुक्त एव । अत्र "विधौ परिभाषोपतिष्ठते नानुवादे" इति "उदीचामातः स्थाने" इति सूत्रस्थस्थानेग्रहणज्ञापितया परिभाषया, निषेधाद निर्दिष्टपरिभाषाया इहाप्रवृत्तेर्न निर्वाहसम्भवोऽपि ।

स्थग्रहणञ्च स्पष्टार्थम् ककारमात्रस्य प्रत्ययत्वाभावादेव तात्स्थ्यलाभात । पूर्वस्य किम् परस्य माभूत्कटुकेति कौमुद्यामेवोक्तम् । अत्र पूर्वग्रहणमकृत्वा "प्रत्यये कि" इति न्यासो युज्यते । आप्परस्य प्रत्ययस्थककारपरस्य चात इत्वमित्यर्थः । सामर्थ्यादाप्परत्वांशे ककारव्यवधानं सोढव्यम् । अत्र "न यासयोः" इति निर्देशात कादौ प्रत्यये इत्यर्थो न भवतीति संक्षेपः ।

केचित्तु "उदीचामातः" इति सूत्रवृत्तिस्थानेग्रहणस्योक्तार्थज्ञापकत्वासम्भवः एवञ्च तद्व्यर्थमेव । वृद्धसंज्ञायामिकपरिभाषोपस्थितिस्तु "मालादीनाञ्च" इति ज्ञापकाद् बोध्या । अन्यथा मालप्रस्थ इत्यादौ मालाशब्दादेरिक्स्थानिकवृद्ध्यघटितत्वेन वृद्धत्वाद "प्रस्थे च" इत्याद्युदात्तत्वे सिद्धे व्यर्थमेव स्यात । अनुवाद इत्यपि च निर्मूलमेव । एवञ्चादीत्यस्य ककारविशेषणत्वे निर्दिष्टपरिभाषया दोषाभावेऽपि सन्निहितत्वाद साक्षाद् विध्युद्देश्यत्वप्रयुक्तप्राधान्याच्चाकारविशेषणत्व-

मेव युक्तमिति संक्षेपात् ।

प्र० १९—"स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति सूत्रस्य असंयोगोपधमुपसर्जनं यत्स्वाङ्गन्तदन्ताददन्तात् प्रातिपदिकाद् वा ङीषित्यर्थः । अतिकेशी अतिकेशेत्याद्युदाहरणम् । अत्र कल्याणपाणिपादेत्यत्र ङीष्व्यावृत्त्यर्थम् "अस्वाङ्गपूर्वपदाद्"इत्यनुवर्तते । तथा च अस्वाङ्गपूर्वपदं यत्स्वाङ्गमित्यादिभाष्यसमासेऽर्थे उपसर्जनात् किं शिखेति ग्रन्थो न युज्यते किन्तु भाष्योक्तमशिखेत्येव । अत्र अशब्देन समासात् "सह नञ्" इति निषेधाप्राप्तेः । अत्र सूत्रे किं स्वाङ्गमिति प्रश्ने "अद्रवम्मूर्त्तिमत् स्वाङ्गम्प्राणिस्थमविकारजम्—अ तत्स्थं तत्र दृष्टञ्च तेन चेत्तत्तथा युतम्" इति लक्षणं त्रिधा स्वाङ्गम् विज्ञेयम् । फलसमन्वयस्तु क्रमशः १–सुस्वेदा, द्रवत्वात् । सुज्ञाना, अमूर्त्तत्वात् । सुमुखा शाला, अप्राणिस्थत्वात् । सुशोफा, विकारजत्वात् । २–सुकेशी सुकेशा वा रथ्या, अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् । ३–सुस्तनी सुस्तना वा प्रतिमा, प्राणिसदृशे स्थितत्वात् । एवमेव संक्षेपतस्स्वाङ्गत्वपरिचयः ।

प्र० २०—अस्योत्तरं १४ चतुर्दशप्रश्नोत्तरेण समं विधेयमिति । प्रत्यय इति महासंज्ञाकरणन्तु श्रुत्यनुरोधात् । तथाचाथर्वणे पठ्यते "को धातुः ? किम प्रातिपदिकम् ? कः प्रत्ययः" इति । डित्थादीन्यव्युत्पन्नानि प्रातिपदिकानीहोदाहरणम् । अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राचीना इति अधिवं विभावनीयम् ।

प्र० २१–यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्राप्राधान्येनालाश्रयणेऽपि विध्यर्थम्प्रत्ययलक्षणम् । प्रत्ययप्राधान्यञ्च वर्णाविशेषणत्वरूपम् । वर्णनिष्ठविशेष्यतानिरूपितविशेषणत्वाभाव इति यावत् । तेनातृणेडित्यत्र हलादौ पिति सार्वधातुके विहित इम्, मित्रशीरित्यत्र हलादौ क्ङिति विधीयमानमित्त्वञ्च सिद्ध्यति । वर्णाश्रये नास्ति प्रत्ययलक्षणमिति तु वर्णप्राधान्यविषयकम् । वर्णप्राधान्यञ्च प्रत्ययनिष्ठप्रकारतानिरूपितवर्णत्वावच्छिन्नविशेष्यताकत्वम्, एतन्निष्ठविशेष्यतानिरूपितप्रकारताशून्यत्वं वर्णस्य । अण् योऽकार इत्याद्यर्थके "टिड्ढ" इति सूत्रे "इको यणचि" इह चास्ति । तत्राद्येन चित्रायां जातेति विग्रहे ङीप्प्रत्ययाभावश्चित्रेत्यत्र । द्वितीयेन च गवे हितं गोहितमित्यत्रावादेशो न भवति । नच गोहितमित्यत्र तु "न लुमता" इति प्रत्ययलक्षणनिषेधादेव नापत्तिरिति वाच्यम् ? लुप्तप्रत्ययनिमित्तकाङ्गोद्देश्यककार्ये एव तत्प्रवृत्तेः इति वार्त्तिककृन्मतम् ।

भाष्यकारास्तु "तृणह इम्" इति सूत्रे "नाभ्यस्तस्य" इत्यतोऽचि न इत्यनुवर्त्य तृणहानीत्यादिव्यावृत्तौ तत्र हलादित्यननुवर्त्तनात् अतृणेडित्यत्रेमागमस्य "शास इद् अङि" इति योगं विभज्याजादौ ङ्ङिति चेदङ्येवेति नियमेनाजादिव्यावृत्तौ तत्र हलोऽग्रहणेन मिमशोरित्यत्रेत्त्वस्य, आर्द्रचर्मन्नित्यत्र "न ङि" इति नलोपनिषेधस्य च स्थानिवत्त्वेन सिद्धेरिति प्रत्ययपर्याप्तस्थानिताके लोपे सति प्रत्ययलक्षणमेव नतु स्थानिवद्भाव इति नियमार्थं सूत्रम् । इह "प्रत्ययस्य लुक्" इतिसूत्रात् प्रत्ययग्रहणेऽनुवर्त्तमाने पुनराद्यप्रत्ययग्रहणात् प्रत्ययपर्याप्तस्थानिताक इत्यर्थलाभः । तेन आघ्नीयेत्यत्र "लिङः सलोप" इतिलोपे प्रत्ययलक्षणेन "अनुदात्तोपदेश" इति नलोपो न । एवम् "प्रत्ययलोपे तल्लक्षणम्" इत्येव सिद्धे द्वितीयप्रत्ययग्रहणसामर्थ्यात् प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताककार्यमेव प्रत्ययलक्षणेन लक्षणीयमित्यर्थलाभः । तेन सुद्दषत्प्रासाद इत्यत्रात्वसन्तस्य चेति दीर्घो न भवति । एवम् अप्रत्ययपर्याप्तस्थानिताकलोपसत्त्वेनोक्तनियमात् स्थानिवद्भावोऽपि न प्रवर्त्तते इति न तेनापि दीर्घापत्तिरिति नियमफलम् ।

वार्त्तिककृत्सम्मतोक्तविध्यर्थत्वपक्षे तु उक्तस्थले प्रत्ययलक्षणेन दीर्घाभावेऽपि स्थानिवत्त्वेन दीर्घापत्तिस्स्यादेवेति नियमार्थत्वपक्ष एव ज्यायानिति संक्षेपः ।

प्र० २२—त्रिशब्दस्य स्त्रीत्वे विवक्षिते "त्रिचतुरोः" इति तिस्रादेशे तिसृ जस् इत्यवस्थायां गुणे प्राप्ते "अचि र ऋतः" इति सूत्रारम्भः । तेन च गुणदीर्घोत्त्वापवादभूतेन बाध्यसामान्यचिन्तया मद्विषये यद् यत् प्राप्तन्तत् सर्वम्मया बाध्यतामिति रीत्या तिस्रो गच्छन्तीत्यत्र गुणस्य, तिस्रः पश्येत्यत्र "प्रथमयोः" इति दीर्घस्य, प्रियतिस्रां गौरवमित्यत्र "ऋत उत्" इत्युत्त्वस्य च बाधस्सिध्यति ।

बाधविशेषचिन्तापक्षे तु मध्येऽपवादन्यायेन दीर्घोत्त्वयोर्बाधेऽपि नो गुणस्य बाधस्स्यात् । एवञ्च लक्ष्यानुसारि व्याख्यानमाश्रित्यात्र बाधसामान्यचिन्तापक्ष एवाश्रेयः ।

केचित्तु—अपवादशब्दो बाधकत्वोपलक्षकः तेन पूर्वविप्रतिषेधेन गुणबाधोऽपि सुतरामिति प्राहुः, तन्न ? प्रमाणविरहात् क्लेशावहत्वाच्च । गुणस्य पूर्वविप्रतिषेधेन इतरयोस्तु परविप्रतिषेधेन बाधक इत्यपि न हार्दम् ? रविधेरन्यत्राचारितार्थ्यात् । नच टौसोश्चारितार्थ्यम् ? यणा गतार्थत्वात् ।

अत्र शब्दरत्नकारास्तु—यत्रानेकविधिम्प्रति येन नाप्राप्त्याऽपवादत्वम्प्राप्तम्

तत्रैव मध्येऽपवादन्यायोपस्थितिः, अत्र तु रभावस्य न केनापि येन नाप्राप्तमिति कथं विशेषचिन्तासम्भव इत्याशङ्क्य किमिदं येन नाप्राप्तिन्यायेन पूर्वसवर्णदीर्घापवादतया प्रथमाद्वितीयामात्रविषयमुत "ऋत उदि"त्यपवादतया पञ्चमीषष्ठीमात्रविषयमाहोस्वित् "ऋतो ङि" इति गुणापवादतया सर्वनामस्थानङिमात्रविषयमिति संशये व्यवस्थाकाङ्क्षायां तन्न्यायप्रवृत्तेः सुपपादत्वादिति संक्षेपः।

प्र० २३—ननु "समासप्रत्ययविधौ प्रतिषेध" इति तदन्तविधेर्निरासात् "श्रुतानुमितयोः श्रुतसम्बन्धो ज्याया"निति न्यायेन "स्त्रियाम्" इत्यस्य गृह्यमाणविशेषणत्वेन बहुकुरुचरेत्यादौ ङीपोऽप्राप्त्याऽनुपसर्जनाधिकारो व्यर्थ एवेति चेन्न? एतत्सामर्थ्यात् स्त्रीप्रत्यये तदन्तविधिज्ञापनेन स्त्रियामित्यस्य स्त्रीप्रत्ययप्रकृतिविशेषणत्वेन तच्चारितार्थ्यसम्भवात्। नह्युपाधेरुपाधिर्भवतीति साक्षाद् विध्युद्देश्यत्वरूपप्राधान्येन तद्विशेषणताया युक्तत्वाच्च। तथाचातिधीवरीत्यत्र न दोषः। नचातिशला ब्राह्मणीत्यत्र प्रोक्तार्थकाणो लुप्तस्योपसर्जनतया तद्व्यावृत्त्यर्थं तस्य चारितार्थ्येन ज्ञापकत्वासम्भव इति वाच्यम्? लक्ष्यानुसारिव्याख्येन "स्त्रियाम्" इत्यस्य गृह्यमाणत्वेनापि तद्व्यावृत्तिसम्भवात्।" अपत्येत्वर्थगतस्त्रीत्वमादाय प्रोक्ताणनिमित्तको ङीप् तु न? तस्याण एतत्स्त्रीत्वेऽवर्तनात्। तस्माद् बहुकुरुचरेति व्यावर्त्यसिद्धये ज्ञापकत्वोपपत्तेः। एवमातिशलेत्याद्यपि। अनुपसर्जनाधिकारस्यापि स्त्रीप्रत्ययप्रकृतिविशेषणत्वे तु तद्वैयर्थ्यमेव स्यात्। एवञ्च गुणः कृतात्मसंस्कारन्यायेन तस्य गृह्यमाणविशेषणत्वमेव। फलन्तु कौम्भकारेय इति। अन्यथा कुम्भेन समासेऽपि केवलकारशब्दस्यापि प्रातिपदिकत्वेन तदर्थस्यापि स्त्रीत्वेन योगात्ततो ङीपि कुम्भेनैकार्थीभूतस्यापि विशिष्टस्यापत्यार्थेन योगे कारीशब्दस्यापि तदयोगस्य नान्तरीयकत्वेन ततोऽपि ढकि विशिष्टस्य तन्निरूपिताङ्गत्वाभावेनाकारस्य वृद्ध्यनापत्तौ समुदायान्ङीपि कौम्भारेयसिद्धावपि कुम्भकारेय इत्यापत्तेर्दुर्वारत्वात्।

नच तदन्तविधिज्ञापनेन समुदायान्ङीप्यपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन कदाचित् कारीशब्दादपि ढगापद्यत एवेति वाच्यम्? एतदधिकारसामर्थ्यादेव तदादिनियमाभावेनाधिकस्यैव कार्यं भोज्यते ननु न्यूनस्येत्यदोषादिति दिक्।

प्र० २४—एतत्प्रश्नस्योत्तरन्तु १३ त्रयोदशप्रश्ने १९ एकोनविंशतिप्रश्ने च स्पष्टतया दत्तम् इति तत एवानुसन्धाय विलेख्यम्।

प्र० २५—मनोरमायाम् "अर्थवदधातुः" इति सूत्रम् व्याचक्षाणेन दीक्षितेन अप्रत्ययान्तः किम् हरिषु करोपीत्यत्र विशिष्टयोर्माभूत् । नच काण्डे कुड्ये इत्यादौ प्रातिपदिकत्वं स्यादेव तथाच "ह्रस्वो नपुंसके" इति ह्रस्वत्वं सोरुत्पत्तिश्च स्याता-मिति वाच्यम् ? कार्यकालपक्षेणेष्टसिद्धेः । यथोद्देशपक्षेऽपि "सप्तम्यधिकरणे च" इत्यादिनिर्देशात् विभक्त्येकादेशो नान्तवत् । प्रातिपदिकग्रहणं वक्तार्थं सामान्या-पेक्षज्ञापकमस्तु इति निरुक्तम् । तत्र नपुंसकह्रस्वत्वस्य प्रातिपदिकधर्मत्वान्नपुंसके वर्त्तमानस्येत्यर्थेनैव प्रातिपदिकलाभे सिद्धे तस्य वैयर्थ्यात् ज्ञापकत्वम् । सामान्या-पेक्षत्वात्सर्वोकारे ह्रस्व एव न स्यात्स्वाद्युत्पत्तिस्तु स्यादेवेति ।

यद्यपि प्रातिपदिकग्रहणमिदं सत्त्वप्रधानप्रातिपदिकग्रहार्थन्तेनात्र न ह्रस्वः । मूलोक्तार्थं ज्ञापिते चारितार्थ्यन्दुर्निरूपम् । संख्याकर्माद्ययोगात् स्वाद्युत्पत्तिरपि न ? औत्सर्गिकैकवचनमपि न ! विनिगमकाभावात्तदनुपपत्तेः । अत्र "सुपो धातुप्राति" इति लुगपि न ? धातुसाहचर्येण सुप्तिङ्भिन्नसमभिव्याहृतस्यैव तेन लुग्विधानात् । सुप्तिङ्भिन्नौ यावितरौ तत्समभिव्याहृतस्येत्यर्थः । इतरसुप्तिङसमभिव्याहृतस्येति यावत् । तेन हरिष्वित्यादौ न दोषः । सुप्तिङ्भ्यामितर इत्यापाततः प्रतीयमाना-र्थाश्रयणे तु हरीतिप्रकृतिरूपसुप्तिङितरसमभिव्याहृतत्वात् सुपो लोपापत्तिः प्रस-ज्ज्येतेति दिक् ।

प्र० २६—प्रश्नस्यास्योत्तरं वैशद्येन २१ एकविंशतितमे प्रश्ने एव दत्तमिति ततोऽवगन्तव्यम् ।

प्र० २७—एतत्प्रश्नस्योत्तरम् ५ पञ्चमप्रश्नतोऽनुसन्धेयम् ।

प्र० २८—अत्र "अनुपधालोपिनः" इति सूत्रे "बहुव्रीहेरूधसः" इति सूत्राद् बहुव्रीहिग्रहणं "संख्याव्ययादेः" इत्यतो ङीप्चानुवर्तते । तथाच तदन्तत्वेनान्नन्ताद् बहुव्रीहेरुपधालोपिनो वा ङीबित्यर्थः । नियमार्थमिदम् । नच पूर्वेण विकल्पसिद्धा-वन्यतरस्यांग्रहणं व्यर्थमिति वाच्यम् ? अन्यथा हि स नित्यार्थो विधिरेव स्यान्नतु नियम इत्युक्तेः ।

अत्र मनोरमाशब्दरत्नयोर्न विशिष्टं किञ्चित् । नियमार्थत्वञ्चास्य "डाबुभा-भ्याम्"इति सूत्रे प्रत्यपादीति ततोऽनुसन्धीयते ।

ननु "मनो डाप्, अनो बहुव्रीहेः" इति विन्यस्यैव डापो नित्यत्वं सिद्धं कि-मिति सूत्रत्रयकरणेनेति तत्सामर्थ्यात् डान्तन्निषेधयोः पर्यायत्वे सिद्धे व्यर्थमन्यतर-

स्यांग्रहणमिति चेन्न ? अन्यतरस्यामिति योगं विभज्य "मनः" इत्यस्य चेष्टविधायकत्वेन योगविभागस्येष्टसिद्ध्यर्थत्वनियमेन "अनो बहुव्रीहेः" इत्यनुवर्त्त्य डाब्विकल्पविधानेन ततः पक्षे "ऋन्नेभ्यः" इति ङीप्प्रत्ययार्थन्तदावश्यकत्वोपपादनात्। एवञ्च व्यर्थं सत् सूत्रम् "अन उपधा" इति अनो योऽसौ विकल्पः स उपधालोपिनोऽनुपसर्जनस्य बहुव्रीहेरेवेति नियमयति। तेन सुपर्वेत्यादौ अनुपधालोपिनि विभक्तसूत्रेण न ङीप्। नियमविधेश्च निषेधमुखेन प्रवृत्त्या बहुराज्ञीत्यादौ "ऋन्नेभ्यः" इति ङीप् सिध्यति। तथाच बहुधीवरीत्यादौ "ऋन्नेभ्य" इति ङीबनुवादेन विहितं "वनो र च" इति रत्वं सिध्यतीति बहुव्रीहौ वेति वचनन्न कार्यम् भवति। एतद्योगविभागाभावे बहुधीवरीत्यत्र प्रकरणान्तरस्थेन "अन उपधेति" ङीपि "ऋन्नेभ्य" इति ङीप्सन्नियुक्तो रेफादेशो न स्यात्। उभयन्तु "वनो र च" इत्यनेन गौरवान्न विधीयते।

किञ्च एवम् "नो बहुव्रीहेः" इत्यस्यानन्तरस्येति न्यायेनरेफादेशविधायकत्वे तेन ङीपि निषिद्धे "अन उपधे"ति ङीप्यपि सन्नियोगशिष्टो रेफादेशो न स्यात्। नच "बहुव्रीहौ वा" तत्साध्यमिति वाच्यम् ? तथा बहुधीवरीत्यस्य सिद्धावपि बहुश्वेत्यत्र वन्नन्तत्वाभावेन "ऋन्नेभ्य" इति ङीब्नापत्तेः। नच बाध्यसामान्यचिन्तयोभयबाधकत्वेन येन नाप्राप्तन्यायेन वा "ऋन्नेभ्य" इत्यस्यैव निषेधकत्वेन दोषाभाव इति वाच्यम् ? एवमपि "बहुव्रीहो वा" इत्यस्यापूर्वविधायकत्वे सुपर्वन्शब्दे डाब्ङयोर्दुर्वारत्वापत्तेः। अस्मन्मते तु "अन उपधा" इत्येतत्प्रापितङीबनुवादेन रमात्रस्य विधानान्न दोषः।

भाष्याकारास्तु पूर्वोक्तयोगविभागे गौरवमालोच्य "अनो बहुव्रीहेः" इत्यस्यानन्तरम् "उपधालोपिनो वा" इति सूत्रयन्ति। "अन उपधा" इत्यादिप्रदेशान्तरस्थं सूत्रं 'डाप्सूत्रेऽन्यतरस्यां ग्रहणञ्च नो विधेयमिति ब्रुवते।

वस्तुतस्तु "अनो बहुव्रीहेः, डाबुभाभ्याम्, अनुपसर्जनात्, उपधालोपिनो वे"ति पाठ्यम्। अन्यथा अतिबहुदामा नगरीत्यत्र ङीबापद्येतेति शब्दरत्नकारमतमेव सम्यक्।

प्र० २१—अत्र "षट्चतुर्भ्यश्च" इति सूत्रे बहुवचननिर्देशात् अर्थप्राधान्यं विवक्षितम् अर्थाच्चोमः परत्वं शब्दद्वारकम्। तथाच सत्यपि तदन्तविधौ परमचतुर्णाम् इत्यादावेव प्रवर्त्तते न तु [गौणे] बहुव्रीहौ। अत एव गौणे तु नुट् नेष्यते

इति सिद्धान्तोऽपि सिध्यति। नचैवमपि तद्वाचकशब्दात् परत्वमेवार्थात् परत्वमिति ततश्च प्रियपञ्चन् आमिति स्थिते तत्त्वस्य सत्त्वेनापत्तितादवस्थ्यमिति वाच्यम्? एतत्सामर्थ्यात् प्रधानीभूतपडर्थवाचकशब्दात् परत्वविवक्षणात्। एतच्च प्राचामनुरोधेन।

नव्यास्तु—द्विवचननिर्देशे गौरवात् समाहारेण सर्वत्र सूत्रेषु निर्देशादर्शनाच्च षट्संज्ञकानां बहुत्वाच्च न बहुवचनत्वव्याघातः। किञ्च "न षट्स्वस्रादिभ्यः" इत्यादौ शब्दबाहुल्याभिप्रायेण बहुवचनस्येव "तिसृभ्यो जसः" इत्यादौ प्रयोगबाहुल्याभिप्रायेण तद्वदिहापि बहुवचनं वक्तुं युक्तम्। किञ्च भाष्ये "नामि" इतिस्थाने आमि" इति न्यासविधानकाले "ह्रस्वनद्याप" इत्यत्र ह्रस्वांशवैयर्थ्यमाशंक्य "नच तिसृणामित्यत्र चारितार्थ्यम् षडित्यत्र त्रेरित्यनुवृत्त्या सिद्धेः" इत्युक्तम्। गौणेऽस्याप्रवृत्तौ प्रियचतसृणामित्यत्र चारितार्थ्यसम्भवेन भाष्यासङ्गतेः। "ह्रस्व-नद्याप" इति न्यासे तु न स्वाङ्गाव्यतात्पर्यम्? त्रिशब्दानुवृत्तिपरभाष्यासङ्गतेः। नैकमुदाहरणम् इति भाष्यासङ्गतेश्च। गौणे नुटोऽप्रवृत्तिसाधकभाष्यान्तरासत्त्वाच्च। पदाम् दतामित्यादौ भूतपूर्वगतिमाश्रित्यातिप्रसङ्गस्तु न ह्रस्वत्वस्य मात्राकालिकात्वस्वरूपतया तत्र सामर्थ्याद् विशेषणभूतमात्राकालिकत्वांशे एव भूतपूर्वगत्याश्रयस्वीकारेण विशेष्यभूताच्त्वांशे तत्त्वानाश्रयणेनादोषादिति युक्तमुत्पश्यामः।

प्र० ३०—अर्थवत्सूत्रे प्रत्ययान्तपर्युदासाभावे विभक्तिविशिष्टस्य प्रातिपदिकत्वे हरिष्वित्यादौ औत्सर्गिकैकवचनस्य, "सुपो धातु" इति लुकः, पचेरन्नित्यत्र च नलोपस्यापत्तिर्दुर्वारैव। नच तथापि कुण्ड इत्यादावन्तवद्भावेन विभक्त्यन्तस्य प्रातिपदिकत्वेन "ह्रस्वो नपुंसक" इतिह्रस्वः सोरुत्पत्तिश्चापद्येते इति वाच्यम्? अभ्युपगम्य कार्यकालपक्षमदोषात्। पक्षद्वयेऽपि "सप्तम्यधिकरणे च" इतिनिर्देशेन नपुंसकवृत्तित्वस्य प्रातिपदिकधर्मतया नपुंसके वर्त्तमानस्येत्यर्थेनैव प्रातिपदिकत्वे लब्धे "ह्रस्वो नपुंसके" इति सूत्रीयप्रातिपदिकग्रहणेन सामान्यतो विभक्त्येकादेशो न स्थानिवदिति ज्ञापनेनादोषात्। यद्यपि सामर्थ्यात् तत्र सत्त्वप्रधानप्रातिपदिकग्रहणेनैव न काण्ड इत्यादौ दोषः, उक्तार्थज्ञापनेऽपि स्वांशेऽचारितार्थ्यञ्च।

किञ्च हरिष्वित्यादौ संख्याकर्माद्ययोगात् स्वाद्युत्पत्तेरप्रामाणिकत्वयौत्सर्गिकैकवचनस्य, "सुपो धातु" इत्यनेन च सुबन्ततिङन्तेतरसमभिव्याहृतप्रातिपदिकप्रकृतिकसुप एव लुग्विधानादत्र चाप्राप्तेः। पचेरन्नित्यादौ नलोपस्य चोच्चारणसामर्थ्या-

दपि शक्यवारणत्वन्तथापि गौरवभीत्या प्रत्ययान्तपर्युदासकरण एव लाघवव्यापारादिति दिक् ।

प्र० ३१—अयञ्च प्रश्नः १६ षोडशप्रश्नोत्तरेणोत्तरणीयः ।

प्र० ३२—अत्र हि "दादेर्धातोर्घः"इति सूत्रे धातोरित्यावर्त्तते तत्रैकमतिरिच्यमानन्धातुपदमुपदेशकालं लक्षयति । फलन्तु अधोगित्यत्राव्याप्तेः दामलिडित्यत्रातिव्याप्तेश्च परिहार इति मनोरमाकाराः ।

शब्दरत्नकारास्तु–तथा दामलिडित्यादिव्यावृत्तावपि दादिपदस्य यथाश्रुतार्थकत्वेन अधोगित्यत्र चाडागमवैशिष्ट्येन तत्त्वापहाराद्दोषताद्वस्थ्येन दादेरित्यस्यैवावृत्त्या लक्षणयैकस्यौपदेशिकदादेरित्यर्थो विधेयः । नच तथा सति धातोरिति व्यर्थमुपदेशदादेरित्यर्थेनैव निर्वाहादिति वाच्यम् ? धातोरित्यस्यैव लक्षणया तथार्थकस्य दादेरित्यनेनान्वयेऽपि न क्षतिरिति मूलतात्पर्यानुसन्धानात् । अत एव भाष्ये धुगित्यत्र घत्वस्यासिद्धत्वाद् ढत्वम्प्राप्नोतीत्याशङ्क्यापवादत्वेन समाधायाथवैवं वक्ष्यामि "होढोऽदादेः"इत्युक्तं सङ्गच्छतेतराम् । धुडित्यादौ च न दोषः घत्वविधायकेन "वा द्रुह"इत्यनेन ढत्वस्यापि विधेयत्वात् । तत्र "धातोः"इति सूत्रे भाष्यकारकृतदादेरित्यनुवृत्तेःफलान्तरासम्भवेन सामर्थ्यादेव दादिपदस्योपदेशवद्दादिलक्षकत्वात् अर्थाधिकारानुरोधाच्च पूर्वत्र निषेधसमर्पकेऽपि । अत एव लब्धातुविषये दामलिडित्यत्र ढत्वघत्वाभावौ सिध्यतः । एवञ्च तदेकवाक्यतयाऽपवादत्वपक्षेऽपि दादिपदस्यौपदेशकालिकदादिलक्षकत्वमुचितम्, आवृत्त्याश्रयणन्तु बालव्युत्पत्तिसिद्धये इति दिक् ।

प्र० ३३—अस्य चोत्तरंसप्तदश १७ प्रश्नेन समन्देयम् ।

प्र० ३४—नरशब्दाज् जातिलक्षणे ङीषि प्राप्ते नृशब्दाच्च "ऋन्नेभ्यः" इति ङीपि च प्राप्ते "नृनरयोर्वृद्धिश्च"इति गणसूत्रमारब्धम् । नन्वत्र नरग्रहणाभावेऽपि नारीति सिध्यति । नच पुंयोगे तथा नरीत्यापद्येतेति वाच्यम् ? तत्र जातेरित्यनुवृत्तेस्तादृशापत्त्यभावात् । अत एव किन्नरीणां नरीणामिति सङ्गच्छत इति चेन्न ! नरत्वजातिमात्रप्रतिपादयिषया नरीतिव्यावृत्तये तदुपादानात् । वस्तुतस्तु नेदं युज्यते नुर्नरस्य च धर्म्या इत्यर्थ"ऋतोऽञ्"इति सूत्रे "नरस्य चेति वक्तव्यम्" इति वार्त्तिकाजन्तत्वेन नारीति रूपसिद्धेः । अत एव वानरशब्दान्न ङीन्प्रत्ययः । प्राञ्चस्तु "यस्येति च"इतिलोपेन नरशब्देऽन्त्याकारापहारादनन्त्यस्यैव वृद्धिः ।

नन्वेह "यस्येति च" इति लोपो न प्रसज्ज्यते वृद्धिविधानसामर्थ्यादिति वाच्यम् ! गुणे त्वन्याय्यकल्पनेति न्यायेन लोपबाधापेक्षया "अलोऽन्त्य" सूत्रबाधस्यैवोचित्वात् इति प्राहुः । तन्न ? प्रत्ययसन्नियोगशिष्टाया वृद्धेरन्तरङ्गत्वेन तया परस्यापि लोपस्य बाधात् ।

किञ्च अन्तरतमपरिभाषापेक्षयाऽलोऽन्त्यपरिभाषायाः परत्वेऽपि परिभाषयोर्विशेष्यविशेषणभावास्वीकारेण "गुणे त्वन्याय्ये" तिन्यायस्येहाविषयत्वेन सत्यपि लोपेऽन्त्यस्यैव रेफस्य वृद्धिस्स्यात् । अत्रोच्यते—गणसूत्रे नर इति शान्तानुकरणं नरःअःनरःना च नरश्च तयोर्नृनरयोरिति । यद् वा "लोहितादिकतन्तेभ्य" इति पररूपं कतन्तवदित्युक्त्या नरस्य अः नरःइति शकन्ध्वादेराकृतिगणत्वेन सिद्धेः । अत्र च प्रश्लेषसामर्थ्यान्नरस्य प्रथमाकार एव गृह्यते नतु द्वितीयः । अथवा नृनरयोरित्यावर्तते एकेन ङीनूप्रत्ययो विधीयत एकेन च वृद्धिरिति नृशब्दसाहचर्यादावृत्तिसामर्थ्याच्च प्रथमाकारस्यैव वृद्धिविधानम् । वानरशब्दे च नरस्यानर्थकत्वेन यतोऽर्थवन्नरशब्दात् ङीनूप्रत्ययःप्रत्यासत्या तदीयरेफान्तसम्बन्धयकारस्यैव वृद्धिविधानाददोषादिति दिक् ।

प्र० ३९—ङेप्रभृतीनां ङकारो "घेर्ङिति" इतिविशेषणार्थ इति "स्वौजसमौट्" सूत्रे मनोरमाकारैरुक्तम् ।

अत्र शब्दरत्नकाराः, ननु "ङेःङपि गुण" इत्येवास्तु "जसि च" इतिसूत्रीयनियमेन 'अङिति चेद् गुणस्तर्हि जस्येव" इत्यनेन सर्वत्र निर्वाहे किमर्थमयमप्रयास इति चेन्न ? ङेप्रभृतीनां ङकारानुबन्धाभावे ङित्प्रत्ययस्याभावेन तथा नियमसम्भवात् । नच ग्रन्थासङ्गतिभिया "अनुनासिकाघटितगुणाद्येकवचनेतरविभक्तौ परतश्चेत तर्हि जस्येव गुणः" इतिनियमाकृतेः कल्पनीयतया व्यर्थमेव ङित्करणमिति वाच्यम् ? एतय इत्यर्थं "जसि च" इति सूत्रस्यावश्यकत्वेन नियमत्वासम्भवात् । दर्शितनियमे अमो व्यावृत्तये अनुनासिकाघटितेति । तथाचानुनासिकाघटिता गुणाद्येकवचनविभक्तयो ङेङसिङसिति तिस्रः, तदितरा अष्टादश स्वादिविभक्तयस्तासु परतश्चेत् तर्हि जस्येवेति नियमात्सप्तदशसु गुणव्यावृत्तिस्सिद्धा । सप्तम्येकवचने ङौ गुणाभावेऽपि न क्षतिरिति मूलकारतात्पर्यं व इति दिक् ।

प्र० ३६—अत्र "सरूपाणाम्" इति सूत्रे "वृद्धो यूना" इति सूत्रादेवकारोऽपकृष्यते, एकविभक्ताविति सारूप्योपलक्षकन्नच तन्निमित्तमिति । तथाचैकविभक्तौ

यानि सरूपाण्येव दृष्टानि तेषामेकः शिष्यत इत्यर्थः । एवञ्चानैमित्तिकत्वेनान्तरङ्ग-त्वात् द्वयुत्पत्तेः प्रागेवैकशेषप्रवृत्त्यानेकत्ववत्ताभावान्न द्वन्द्वप्रसक्तिः । अत एव द्व-न्द्वापवादकत्वमेकशेषस्य श्रूयते । अपकर्षादेव च जननीपरिच्छेत्तृवाचिनोर्मातृशब्द-योर्भ्यामादौ सारूप्येऽपि औजसादौ वैरूप्यान्नैकशेष इति । एकविभक्ताविव्यनु-पादाने च हरितहरिणप्रकृतिकहरिणीशब्दयोस्तद्धिते पुंवद्भावेन हारितिहारिणि-रित्यादौ वैरूप्यादेकशेषाभावःप्रसज्येत । एकत्रापि विभक्तौ यानि विरूपाणि ने-त्यर्थस्य स्फुटप्रतिपत्तये कृतमेकग्रहणमिति । अत्र सूत्र एकविभक्ताविव्यस्यानुपादाने यानि सरूपाणि तेषामेकशेष एवेत्यर्थे हारितिहारिणिरित्यादौ पुंवद्भावेन वैरूप्यात् प्रयोगमात्रावच्छेदेन सारूप्यस्यासम्भवात् कचित्कस्यैव तस्य ग्रहणे जननीपरि-च्छेत्तृवाचिनोर्मातृशब्दयोरेकशेषप्राप्त्या निषेधार्थमारब्धम् "प्रातिपदिकैकशेषे मा-तृमात्रोः प्रतिषेध" इति वार्त्तिकस्य अथानेन पक्षेणार्थःस्यात् इत्यादिना विभक्तेः सारूप्योपलक्षकत्वमाश्रित्य प्रातिपदिकैकशेषपक्षो भाष्यकृता समर्थ्यं खण्डनादेवका-रापकर्षो ध्वनितः । अन्यथा तथोपलक्षणत्वाश्रयणेऽपि भ्यामादौ सारूप्यमादायै-कशेषो दुर्वारस्स्यादिति ।

प्रक्रियाकारास्तु—राम राम औ इति स्थिते इति, एकविभक्तौ परत इति च । राम राम इत्यत्रावयवयोरिव मिलितेनार्थवत्त्वेन समुदायस्यापि प्रातिपदिकत्वे "एकाज्द्विर्वचन" न्यायेन समुदायादेव द्विवचनोत्पत्त्याऽवयवार्थानामपि समुदायघट-कत्वेन संख्यायामन्वयित्वादयोगादिति वदन्तः परास्ताः । तथा सति मातृमातारावि-त्यादावेकशेषस्य दुर्निवारत्वापत्तेः । भाष्ये आवृत्तेरनुक्ततया च एकविभक्ताविव्या-वर्त्यापकृष्य चैवकारमेकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेकविभक्तौ परत एकशेष इत्यर्थासम्भवात् । प्रत्युत प्रत्यासत्तिन्यायेन यत्र विभक्तावेकशेषस्तस्यां यानि सरूपाण्येवेत्यर्थास्त्वया मातृमात्रोरेकशेषापत्तेस्तादवस्थ्यात् । भिक्षाणां समूहो भैक्षमित्याद्यसिद्ध्यापत्तेश्च ।

नच यथा "अवेः कः" इत्यविशब्दात्केऽविकशब्दादेव समूहार्थकेऽण्प्रत्यये आविकमित्येव भवति नतु केवलादविशब्दात्तादृशाण्यावमितोत्यर्थकाविरविकन्याः येन भिक्षा अ इति स्थिते अन्तरङ्गानपि इति न्यायद्वारा परत्वान्नित्यत्वाच्चादिवृद्धि-द्वारा निष्पन्न एकशेषाभावेन भैक्षमित्यत्र दत्ताऽपत्तिरुद्धवारेति वाच्यम् ? एतद्यु-क्तेर्दृक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वात् । भाष्यविरोधाच्च न समर्थानामिति निर्वाहः । रामा-

वित्यादावपि परत्वान्नित्यत्वाच्च वृद्धौ उभयत्र आश्रयणेऽन्तादिवद्भावाभावेन विभक्तिपरत्वाभावेन एकदेशविकृतन्यायाश्रयणेऽपि परस्य हलन्तत्वेन वैरूप्यादेकशेषानापत्तिश्च । भाष्ये "सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा च" इत्युक्त्याऽजहत्स्वार्थायां वृत्तौ विभक्त्यन्तानामेकशेषस्य युक्तत्वेऽपि जहत्स्वार्थायां तदयोगात् पक्षान्तरेऽपि प्रथमप्रवृत्तस्यैकवचनस्य त्यागायोगात् । अन्यथा षष्ठीतत्पुरुषाद्युच्छेदापत्तेः । तत्रापि पूर्वपदस्योत्तरपदार्थे उपसङ्क्रमेण षष्ठ्याद्ययोगादिति दिक् ।

प्र० ३७—अयञ्च षोडश १६ प्रश्नोत्तरेण समाधेयः ।

प्र० ३८—सर्वनामसंज्ञाविधायक "सर्वादीनि सर्वनामानि" इति सूत्रे सर्वादिगणे अन्यतरान्यतमशब्दावव्युत्पन्नौ इत्युक्तम् । ततश्च त्वत्त्व इति द्वावप्यदन्तावन्यपर्यायौ । एक उदात्तोऽपरोऽनुदात्त इत्येके । एकस्तान्त इत्यपरे । एतत्त्वसमन्ये इत्युदात्तस्य "उत त्वः पश्यत्" इत्यत्रानुदात्तस्य च दर्शनादिति काशिकाकृतो वदन्ति । संहितया पाठे तान्तस्यास्फुटत्वेऽपि तान्तश्छेत्तव्योऽन्यथा एकश्रुत्या सकृदेव पठेत् । तान्तत्वं कथमिति चेन्न ? "त्वत्त्वसमसिमेत्यनुच्चानि" इति फिट् सूत्रे द्वयोर्दर्शनात् । अत एव "त्वतरोऽत्वत् भवति, सूत उत्वत्" इति ।

वेदभाष्यकारास्तु त्वदिति सर्वनामसु पठितोऽनुदात्तोऽयमन्यपर्याय इति । अत्रैव जयदेवोऽपि प्रायुङ्क्त त्वदधरमधुरमधूनि पिबन्तम् इति । त्वतोऽन्यस्या अधर इति विग्रहः ननु तवाधर इति ? पश्यति दिशि दिशि रहसि भवन्तम् इति पूर्ववाक्येन सहानन्वयापत्तेः । तेन हि वाक्यशेषेण कृष्णस्य सम्बोध्यत्वावगत्या सम्बोध्यस्य युष्मदर्थत्वेनान्वयः पिबन्तम्भवन्तमिति चानन्वितमिति बोध्यम् ।

प्रथमहल्ग्रहणं खण्डयित्वाऽविभर्भवानित्यत्र दोषवारणाय "रात् सस्य" इति सूत्रे तकारम्प्रक्लिप्य कीर्त् इत्यत्र लोपापत्तिस्तकारस्य दत्ता सच प्रयोग एव न भवति "यथालक्षणमप्रयुक्ते" इति भाष्यरीत्या तत्खण्डनं कृतम् । अप्रयुक्ते लक्षणप्रवृत्त्यभावस्यैव योग्यतेत्यर्थः । प्रयुक्तानामिदमन्वाख्यानमिति सिद्धान्तात् । लक्षणस्याभावोऽलक्षणमर्थाभावेऽव्ययीभावात् । ततो लक्षणाभावस्य योग्यता यथालक्षणमिति योग्यतासूत्रेण यथार्थेऽव्ययीभावेन निरुक्तार्थलाभादिति ।

प्र० ३९—"युनस्तिः" इति सूत्रेण तिप्रत्यये युवतिरिति रूपम्भवति । युवतीति यत्र तत्र श्रूयमाणं युधातोः शत्रन्तात् "उगितश्च" इति ङीप्प्रत्ययान्तम् । यौति मिश्रीकरोति पत्येति व्युत्पत्तिः ।

यत्तु यौतेर्बाहुलकादौणादिके कतिप्रत्यये तत्समाधेयमिति तन्न ? उभयथापि युवतीनां समूहो यौवतमिति रूपेऽविशेषात् । तिप्रत्ययान्तात्तु अण्प्रत्यये पुंवद्भावे यौवनमित्येव रूपम् भवति । नच भिक्षादिपाठसामर्थ्यात्तत्र वद्भावो न स्यादिति वाच्यम् ? भाष्ये तत्पाठस्य प्रत्याख्यानात् । दिगर्थस्तु विकाराभावमात्रतात्पर्यकत्वे वृद्ध्यादीनामप्यनापत्तिः । तथाच युवतीकरनिर्मथितन्दधि इत्यपि साधुः। युवतिशब्दे लिङ्गविशिष्टपरिभाषयैव प्रातिपदिककार्ये सिद्धे अत्र "तद्धिताः" इत्यधिकारस्तत्परिभाषाऽनित्यत्वज्ञापनार्थं इति । येन नाप्राप्तन्यायेन "ऋन्नेभ्य" इति ङीपो "यूनस्तिः" इति सूत्रेण बाधान्न यूनीशब्दोऽपि साधीयानिति दिक् ।

प्र० ४०—अयञ्च प्रश्नः १ प्रथमप्रश्नोत्तरेण समाधेयः ।

प्र० ४१—प्रश्नस्य चास्योत्तरम् पूर्वेण २ द्वितीयप्रश्नोत्तरेण समं विधेयम् ।

प्र० ४२—एष प्रश्नस्तु ३ तृतीयप्रश्नोत्तरेण साधु समाधेयः ।

प्र० ४३—एतस्य च प्रश्नस्योत्तरं ४ चतुर्थप्रश्ने एव दत्तमिति ततोऽनुसन्धीयताम् ।

प्र० ४४—प्रश्नोऽयम् ५ पञ्चमप्रश्नस्योत्तरेणोत्तरणीयः ।

प्र० ४५—अस्य समाधिः ६ षष्ठे प्रश्ने समीरितः ।

प्र० ४६—एष च १४ चतुर्दशप्रश्नोत्तरेण साऽनुसन्धेयः ।

प्र० ४७—अयमपि प्रश्नः प्रथमेन तुल्य इति तथैवानुसन्धाय समाधातुं शक्यते ।

प्र० ४८—प्रश्नस्यास्योत्तरम् ३६ षट्त्रिंशे प्रदत्तमिति तदेकदेशेन समाधा शक्यते ।

प्र० ४९—ननु "रषाभ्याम्" इति सूत्रे पदग्रहणासत्त्वेऽपि "अपदन्न प्रयुञ्जीत" इति भाष्यबलादेव रेफषकारयोः पदस्थत्वे लब्धे पदग्रहणमेव व्यर्थीभूय समानत्वबोधकं स्यादिति समानग्रहणं व्यर्थमिति चेन्न ? समानपदस्याखण्डबोधकतया चारितार्थ्यात् अत एव रामनामेत्यादौ न णत्वम् ।

अ० ५० अखण्डत्वञ्चात्र नावान्तरपदशून्यत्वम्, मातृभोगीणादौ णत्वाभावापत्तेः । किन्तु निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वम् । अत एव आचार्यभागीन इत्यत्र णत्वनिषेधकम् "आचार्यादणत्वञ्चे"ति वार्त्तिकं सफलम् । सुपर्वणेत्यादिसिद्धये निमित्तानधिकरणेति । पदञ्चार्थे लोके विभक्तीतरानपेक्षतयाऽर्थबोधकत्वेन दृष्टम् ।

तथाच गन्धर्वगानमित्यादौ सुबुत्पत्तेः प्राक् समासेऽपि णत्वाभावस्साधुः। नचैवम् "वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते" इति न्यायेन पक्षे ऋवर्णात् परस्य णत्वे "क्षुभ्नादिषु" नृनमनशब्दपाठज्ञापकत्वमसङ्गतमिति वाच्यम्? संज्ञाभूतस्याखण्डस्य नृनमनशब्दस्य "पूर्वपदात् संज्ञायाम्" इति णत्वप्राप्त्या तद्वाध्योपपत्तेः। नचैवं रामनगरमित्यत्र णत्वापत्तिरिति वाच्यम्? निमित्तविशिष्टनकारस्य णत्वमित्यर्थेनादोषात्। वैशिष्ट्यञ्च स्वोत्तरत्वस्वाघटितपदाघटकत्वोभयसम्बन्धेनेति।

पञ्चमीसमासस्य पाक्षिकत्वम् ४१ एकचत्वारिंशे प्रश्ने विचारितमिति तदनुसन्धायातः परं लेख्यम्।

प्र० ६०—एतत्प्रश्नस्योत्तरम् पञ्चमे ५ प्रश्न एव वैशद्येन व्याख्यातमवगम्यताम्।

प्रश्न ६१—अयञ्च प्रश्नः २८ अष्टाविंशतितमे समाहित इति साधु ततोऽनुसन्धाय समाधेयः।

प्र० ६२—एष च विंशे २० प्रश्ने मनो नियोज्य समाधातुं शक्यते।

प्र० ६३—एतस्य चोत्तरं षट्त्रिंशे ३६ प्रश्ने प्रत्तमिति बोध्यम्।

प्र० ६४—नच "षड्भ्यो लुक्" इत्यत्र षष इत्युक्त्याऽपि सिद्धे बहुवचननिर्देशो व्यर्थ इति वाच्यम्! षट्शब्देन षट्संज्ञकः शब्दस्तदर्थसंख्याश्रयश्चेत्युभयमपि विवक्षितमिति तेषां बहुत्वाद् बहुवचनान्तनिर्देशस्य सौष्ठवात्। तत्रार्थात् परत्वम् स्वगतसंख्यानुवादकत्वरूपं गौणन्तेन गौणे नैतत् प्रवर्त्तते इति प्राञ्चः।

वस्तुतस्तु—निर्देशस्य "षड्भ्य" इत्यस्य "तिसृभ्य" इत्यादिवदेव षट्संज्ञकानां बहुत्वाच्चोपपत्तौ शङ्काभावात्। नहि सर्वत्र जातिनिर्देश एवाचार्यप्रकारानुसतः। ष शब्दस्य बहुवचनान्तस्यैव संज्ञात्वाच्च। एवञ्चेदं विहितविशेषणम्। संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन संख्यावाचित्वात् परमपञ्चादीनामपि षट्त्वन्नासम्भवम्। लोके गणनाप्रसिद्धा एव संख्यावाचिन इत्यत्र च मानाभावः। नचोपसर्जने दोषः? तत्र संख्याया अप्राधान्येनातिक्रान्ताद्यर्थस्यैव प्राधान्यादप्राप्तेः। सर्वमपीदं "सर्वादीनि" सूत्रे भाष्ये स्पष्टम्।

अतः परम् प्रत्ययलोपशास्त्रविचारो दत्तोत्तरेण २१ एकविंशप्रश्नेनानुसन्धाय समाधेयः।

प्र० ६६—अयञ्च ३२ द्वात्रिंशत्प्रश्ने साधु सन्निरूपित इति तत एव समाधेयः।

पत्नीवार
गणपत्री-कंठाग्र
न्याय कंठाग्रिवा



प्र० ९६—अस्योत्तरम् २३ त्रयोविंशतिप्रश्ने दत्तमनुसन्धेयम् ।

प्र० ९७—अयम् १४ चतुर्दशप्रश्नोत्तरेणैव दत्तोत्तरः ।

प्र० ९८—ननु रमा गौरीत्यादौ "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्"इति परिभाषया "कुमारः श्रमणादिभिः"इति ज्ञापितयैव सिद्धे "ङ्याप्प्रातिपदिकात्"इति सूत्रे ङ्याब्ग्रहणम् व्यर्थम् ।

नच स्त्रीप्रत्ययान्ताच्चेत् ङ्याबन्तादिति नियमार्थमेव तदिति वाच्यम् ? स्त्रीप्रत्ययान्तरान्तेभ्यो युवतिश्वश्र्वादिभ्योऽनापत्तेः । इति चेन्न ? लोहिनिका आर्यिकेत्यादिसिद्धये "ङ्याबन्तात् तद्धितोत्पत्तिर्यथा स्यान्ङ्याब्स्याम्प्राङ्माभूत्"इति ज्ञापनार्थत्वात् । नच दृष्टा माल, दृष्टा गौर इत्यत्र प्रातिपदिकत्वस्यादृष्टत्वेन लिङ्गविशिष्टपरिभाषाया अप्रवृत्त्या दृष्टा माला, दृष्टा गौरीत्यादिसमुदायस्य "स्त्रीप्रत्यये चानुपसर्जने न"इत्यस्यानुकूलतया ङ्याबन्तत्वेन ततः सुबुत्पत्तये ङ्याब्ग्रहणञ्चरितार्थम्तत्फलन्तु आम् दृष्टा माला देवदत्तेत्यादावेकपदान्तरितत्वेन "आम एकान्तरम्"इति निषेध इति वाच्यम् ? ज्ञापकपरभाष्यप्रामाण्येन प्रातिपदिकसामर्थ्येन च पृथगर्थोपस्थापकविभक्त्यन्तानवयवङ्याबन्तस्यैव ग्रहणेनादोषात् । प्रत्येकमपि पदत्वसत्त्वेनैकान्तरत्वाभावाच्च । गौणी मुख्या वा संख्योत्तरा पूर्वां संख्यां बाधत इति नियमात् । एवम् "समासान्ताः"इत्यत्र तादर्थ्यात्ताच्छब्द्यमिति "गोस्त्रियोः" सूत्रभाष्यप्रामाण्येनाकृतसमासेऽलौकिकप्रक्रियावाक्य एवोत्तरपदानन्तरम्प्रक्रियावाक्यस्यावयवीभूय समासान्ताः प्रवर्त्तन्त इति सिद्धान्तेन बहुगोमत्केत्यादौ न दोषः ।

वस्तुतस्तु सुबन्तात्तद्धितोत्पत्तिरिति रीत्या स्वार्थद्रव्यलिङ्गसंख्याकारकाणां ज्ञानक्रमानुरोधात् तत्तत्प्रयुक्तकार्याणां क्रमिकत्वेन संख्याप्रयुक्तसुबुत्पत्तेः प्रागेव लिङ्गप्रयुक्तस्त्रङ्याप्पोः प्रवृत्तौ दोषाभावेन ङ्याब्ग्रहणं व्यर्थमेवेति ।

स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वे बीजम् भाष्यरीत्यावसेयम् । तथाहि विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतया पूर्वं स्वार्थरूपजात्यादिज्ञानम्, ततो धर्मित्वेन प्राधान्याल्लिङ्गादिभिराकाङ्क्षितत्वाच्च तदाश्रयज्ञानम्, ततः स्वमात्रापेक्षत्वाल्लिङ्गस्य ज्ञानम्, ततो विजातीयक्रियाकारकापेक्षया सजातीयपदार्थापेक्षसंख्यायाः प्रथमोपस्थित्या ज्ञानम्, ततः कारकरूपविभक्त्यर्थाकाङ्क्षा, तन्निवृत्तौ हि बहिर्भूतकुत्सादिप्रयोग इति "कुत्सिते" सूत्रे भाष्ये स्पष्टम् । अयञ्च क्रमोऽभि-

मतत्वशास्त्रप्रक्रियाप्रपञ्चे नचैवं लौकिकानामबोधेऽपि दोषः । अत एवार्थवदुद्देशेन प्रातिपदिकसंज्ञा विधीयते । अत एव च "घकालतनेषु कालनाम्नः" इति सूत्रमपि चरितार्थम् ।

एतादृशयुक्तिसिद्धार्थानुवादकमेव ड्याब्ग्रहणम् । लोहिनिकेति सिध्यर्थञ्च "लोहितालिङ्गबाधनं वा" इति करणीयमेव । एवञ्च न सूत्रभाष्यादिविरोध इति दिक् ।

प्र० ५९—पञ्चमीसमासविचारम् २ द्वितीयप्रश्ने कृतमनुसन्धाय ३ तृतीयप्रश्ने हल्ग्रहणप्रयोजनञ्च भाष्यमवलोक्य संक्षेपतो व्याख्येयम् ।

प्र० ६०—ननु "सर्वनाम्नः स्याट्" इतिसूत्रस्थाने "सर्वनाम्नोऽछङ् च" इत्येव सूत्रणीयम् । तावतैव अन्तरङ्गत्वात् पूर्वं याटि परे ङित्वादन्त्यादेशे अछङि सर्वस्या इत्यादिसिद्धेरिति स्याट्करणादिकं व्यर्थमिति चेन्न ? पूर्वमछङि असन्तत्वाभावेन मुत्वानापत्त्या पुर्वम्मुत्वे वा ऽमुष्यै इत्याद्यसिद्धेः । एवञ्च व्याख्याभेदेन अमुमुयङित्यादिवदिहापि रूपद्वयमापद्येत । मुत्वपक्षे आप्स्थानिकत्वेनामुष्या प्रत्ययतया तदवयवत्वेन षत्वसिद्धिः । एवञ्च "अदसोऽसेः" इति सूत्रेऽसान्तस्येत्यर्थं स्याड्ग्रहणमपि ज्ञापकम्बोध्यम् ।

परे तु संज्ञाकृतबहिरङ्गत्वस्यानाश्रयात् नित्यत्वादछङि रूपासिद्धिः । नच "अछङ् च" इति न्यासे चेन याडपि विधेय इति न दोष इति वाच्यम् ? "विभाषा द्वितीया" इति सूत्रेण विनिगमकाभावादुभयोरपि विकल्पे द्वितीयाऽयै इत्याद्यसिद्ध्यापत्तेः ।

किञ्च तृज्वत्सूत्रभाष्यरीत्या विषयाभेदेऽपि येन नाप्राप्तन्यायविषयकत्वस्य निर्बाधत्वेन अछङो याडपवादत्वेन तद्विषये याड् दुर्लभ एव स्यादित्याहुः ।

वस्तुतस्तु—"आमि सर्वनाम्नः सुट् याटो ह्रस्वश्च" इति सूत्रयितुमुचितम् । दीर्घोच्चारणसामर्थ्याच्च न याटो ह्रस्वापत्तिरिति ? ह्रस्वोच्चारणे वा अकारसामर्थ्यादेव "अतो गुणे" इति पररूपस्य वार्यत्वादिति दिक् ।

प्र० ६१—अत्र "डाबुभाभ्यामन्यतरस्याम्" इति सूत्रीयान्यतरस्यांग्रहणस्य फलमुपपादितम् ५१ एकपञ्चाशत्तमे प्रश्ने इति तद् विन्यस्य ३४ चतुस्त्रिंशत्प्रश्नवत् नरशब्देऽन्त्यवृद्धिवारणोपायो लेख्य इति ।

प्र० ६२—अयञ्च प्रश्नः १ प्रथमप्रश्नेन तुल्य एव समाधेयः ।

प्र० ६३—प्रश्नस्यैतस्योत्तरम् ४८ अष्टाचत्वारिंशत्प्रश्नवत् ।

प्र० ६४—अस्योत्तरम् २१ एकविंशतितमप्रश्नवत् कार्यम् ।

प्र० ६५—अयञ्च ५५ पञ्चपञ्चाशत्प्रश्नवदनुसन्धेयः ।

प्र० ६६—अयं ६ षष्ठेन प्रश्नेन समसुत्तरणीयः ।

प्र० ६७—चतुर्दश १४ प्रश्नवदेवानुसन्धायास्योत्तरंकर्त्तव्यम् ।

प्र० ६८—एतस्य च ३ तृतीयप्रश्नवदुत्तरं कार्यम् ।

प्र० ६९—ननु "युष्मदस्मद्भ्यां ङसोऽश्" इति सूत्रेण यो ङसोऽश् विधीयते तत्र शित्वं व्यर्थम् । नच "आदेः परस्य" इत्यादेरादेशापत्तिबाधाय तदिति वाच्यम् ? अकारस्याकारविधानवैयर्थ्येन "आदेः" इत्यस्यानुपस्थित्या सामर्थ्याद्-न्त्यस्यैवादेशेऽतो गुणे तवेति सिद्धौ शित्वस्य वैयर्थ्यात् । इति चेन्न ? आदेर्वि-धानेऽपि आदेशत्वसम्पादनेन यत्वनिवृत्त्या "शेषे लोप" इति लोपार्थमकारविधा-नस्य साफल्यादुक्तपरिभाषाबाधे मानाभावेन सर्वादेशार्थं शित्वस्यावश्यकत्वात् । नच "योऽच्यङसि" इति न्यासेन यत्वादिनिवृत्तिस्तरामिति वाच्यम् ? अङसी-त्यत्र नञः पर्युदासार्थकत्वे एकवचनान्तत्वादिना सादृश्यग्रहे युवयोरित्याद्यसिद्ध्या-पत्तेः । प्रसज्यप्रतिषेधार्थकत्वे "युष्मदस्मदोः" इत्यत्र हलादेरित्यर्थस्य "योऽचि" इति अज्ग्रहणपरिशेषसिद्धत्वेनोक्तन्यासे ङसोऽपि परिशिष्टत्वात्तवेत्यादावात्वापत्तेः ।

ननु "अनादेश" इत्यत्र निषादस्थपतिन्यायेन लाघवमूलकतत्पुरुषस्वीकृत्या त्वमित्यादौ सम्पूर्णविभक्त्यादेशे यत्वनिवृत्त्यर्थत्वात् प्रकृतेऽवयवादेशे यत्वम्भवेदेव । नचैवम् अन्त्यस्यैवादेशे पररूपे आदेशविभक्तित्वस्य प्राप्ततया यत्वं वार्यमिति वाच्यम् ? प्रतियोगित्वसम्बन्धेन युष्मदस्मदावुच्चार्य्य विहितादेशस्यैव "अनादेश" इत्यत्र ग्रहणेन पररूपस्य प्रकृतेऽतथात्वेन यत्वमनिवार्यमिति वाद्यात् । इति चेन्न ? एतस्मादेव शिद्ग्रहणाज् ज्ञापकात् "सर्वे सर्वपदादेशा" इति न्यायसञ्चारात् । क-ल्पितार्थवत्त्वेव स्थान्यादेशत्वविश्रान्तेर्भाष्यतात्पर्यात् । अत एव प्रकृत्येत्यादौ न तुगनुपपन्नः । सामर्थ्याच्च सिजादयोऽनर्थकस्यापि भवन्ति ।

वस्तुतस्तु प्रकृत्यर्थान्वितस्वार्थबोधकत्वम् प्रत्ययानामिति सिद्धान्तानुसारेण विकरणानामपि द्योत्यार्थवत्त्वेनैव निर्वाहात् ।

ननु प्रागाकमादेशात् विभक्तेरनादेशत्वेन "योऽचि" इति यत्वप्राप्तौ "शेषे लोपः" इत्यस्याप्राप्त्याऽवर्णान्तत्वाभावेन सुटोऽप्रशक्त्या साम इति निर्देशोऽसङ्गत इति चेन्न ? तथाऽनिर्देशे आकमादेशानन्तरं शेषेलोपे पश्चादकारान्तत्वेन प्राप्तस्य

छुटो निवृत्तये तत्त्वस्यावश्यकत्वात्। अन्नायमभिसन्धिः, सामः प्रसङ्गे आकमिति सूत्रार्थः। तत्र शब्दानित्यत्ववारणाय साम्प्रतिकसकारबुद्धेरसम्भवेऽपि सकारोच्चारणसामर्थ्याद् भाविसकारबुद्धेर्ग्रहणम्। सकारबुद्धिनिवृत्तिश्च आमोऽभावात्।

एवञ्चाकमि स्थानिवत्त्वेन साम्त्वस्यैवानयनं नत्वाम्त्वस्येति न छुडागमापत्तिसम्भवोऽपि। अत एव भाष्योदाहरणेऽतित्वाकमित्यत्राकमनुडभावे सिद्धौ। नचैवं यत्र'छुड् भावी तत्रैवाकमः प्रवृत्तिरिति वाच्यम्? अशास्त्रीयधर्मस्य साम्त्वस्यातिदेशानयनासम्भवात् सामो भावित्वस्य सर्वथाऽशक्योपपादनत्वात्। एवञ्च तादृशभाष्यादिसङ्गतये दोषनिरासाय च सछुट्कनिर्देशोऽन्त्यलोपपक्षे चरितार्थः। टिलोपपक्षे तु स्वप्नेऽपि न सार्थक्यमित्यवधेयम्।

प्र० ७०—अछुङ्विधायके "पुंसोऽछुङ्" इति सूत्रे "इतोऽत्सर्वनामस्थाने" इति सूत्रात् स'नामस्थाने इति सप्तम्यन्तमनुवर्त्तते। तत्र विषयसप्तमीत्वेन सर्वनामस्थाने विवक्षिते इत्यर्थः। अत एव परमपुमानित्यत्र परत्वादछुङि समासान्तोदात्तत्वमछुङोऽकारस्य सिद्ध्यति। परसप्तमीत्वे तु नास्य सिद्धिसम्भवोऽपि? अन्तरङ्गत्वात् सर्वनामस्थानोत्पत्तेः प्रागेव पुंशब्दोकारस्योदात्तत्वे ध्वंसनधर्मिणो हलः स्थाने तद्धर्मिणोऽनुदात्तस्यैवादेशस्य प्रसङ्गात्। नचोकारस्य जातोऽपि स्वरोऽनन्त्यत्वादकृतव्यूहपरिभाषया प्रागेव निवर्त्तयिष्यत इति अछुङश्चान्यत्वात् करिष्यत इति वाच्यम्! अन्तरङ्गे स्वरे कर्त्तव्ये बहिरङ्गस्याछुङोऽसिद्धत्वात्। इति कैयटभाष्यादयः।

वस्तुतस्तु न परसप्तम्यामपि दोषलेशः? अकृतव्यूहपरिभाषाया अन्तरङ्गपरिभाषापवादत्वात्। नचैवम् अछुङि प्रातिपदिकस्वरेण सतिशिष्टेन प्रत्ययस्वरस्य बाधादछुङ उदात्तत्वापत्तिः, इष्यते तूकारस्य, पुमान् पुमांसम्परिपात्वित्यादौ तथैव पाठादिति वाच्यम्? डुम्सुनो नित्करणसामर्थ्यात् प्रातिपदिकस्वराभावसम्पादनात्। नच प्रकृतिप्रत्ययविभागशून्येष्वव्युत्पन्नेष्वेव "फिषः" इत्यस्य प्रवृत्तेरयुक्तमेतदिति वाच्यम्! क्वचित् सखण्डेष्वपि तत्प्रवृत्तेरेवं ज्ञापनात्। यद्यपि असिद्धम्बरङ्गमिति परिभाषया नित्वाभावेऽपि "फिष" इति स्वरे कर्त्तव्येऽछुङो बहिरङ्गस्यासिद्धत्वात् प्रत्ययस्वरेणोकारस्योदात्तत्वे एव स्थितेऽछुङोऽनुदात्तत्वस्याक्षतेरिति वक्तुं शक्यम्। तथापि एतेन नित्करणेन बहिरङ्गपरिभाषाया अनित्यत्वज्ञापनस्यापि फलत्वात् इति दिक्।

प्र० ७१—अयं हि ६ षष्ठप्रश्नोत्तरेण समुत्तरणीयः।

प्र० ७२—एष तु १४ चतुर्दशप्रश्नवद् हृदि कृत्य समाधेयः ।

प्र० ७३—एष हि ३६ षट्त्रिंशप्रश्नवदनुसन्धाय समाधेयः ।

प्र० ७४—एतस्य च प्रश्नस्योत्तरम् २१ एकविंशप्रश्ने समुक्तप्रायेण समम् विधेयम् ।

प्र० ७५—यूयमित्यत्र "शेषे लोपः" अन्त्यलोपः इति पक्षे "जसश्शी" इति शीभावः प्राप्तः परन्तु "अङ्गकार्यं कृते पुनर्नाङ्गकार्यम्" इत्येतद्रूपान्तरभूतेन "अङ्गवृत्ते पुनर्वृत्तावविधिः" इति वचनेन निषिध्यते । अङ्गे अङ्गाधिकारे वृत्तं वर्णितं यस्य तदङ्गवृत्तं शास्त्रम्, तत्र कृते सति पुनरन्यस्य सत्यामपि प्रवृत्तौ प्राप्तायाम् अविधिरिति परिभाषार्थः ।

अत्र परिभाषायां ज्ञापकन्तु "ज्यादादीयसः" इति सूत्रीयभाष्यज्ञापनप्रकारः । तत्र हि "बहोर्लोपः" इत्यतो लोप एवानुवर्त्तमाने "अकृत्सार्व"तिदीर्घे च ज्यायानिति सिद्धे आकारविधानवैयर्थ्यात परिभाषाया ज्ञापनात् । तथैव "ज्ञाजनोर्जा" इति सूत्रेऽपि । नचैवम् परिभाषास्वीकारे द्वाभ्यामित्यत्रापि "सुपि च" इति न प्रवर्त्ततेति वाच्यम् ? "द्वयोरेकस्य निर्द्धारणः" इति सूत्रीयनिर्देशात परिभाषाया अनित्यत्वज्ञापनेनापि निर्वाहात ।

यत्त्वत्र केचित परिनिष्ठितस्येति पठन्ति द्वाभ्यामित्यत्र परिनिष्ठितत्वाभावेन न दोष इति प्रवदन्ति च तन्न ? ज्यायानित्यादौ दीर्घं विना परिनिष्ठितत्वाभावेन भाष्योक्तज्ञापनविरोधापत्तेः । यदि तु "भ्यसोऽभ्यम्" इतिसूत्रभाष्यरीत्या तथ्यं वक्तुमतमिति कथ्यते तदा अनित्यत्वपक्षे स नेयः । एवञ्चोपपद्यन्ते काशिकादिग्रन्था अपि ।

अत्रोपायान्तरन्तु "ङेप्रथमयोरम्" इत्यत्र मकारान्तरमप्रश्लिष्य तस्योपलक्षकत्वेन च "जसः शी" इत्यत्र सकारस्यापि प्रश्लेषबोधनेन 'सान्तस्य जसः शीभावः' "अतोऽम्" इति सूत्रादम्ग्रहणमनुवर्त्त्य अम् अमेवेति व्याख्यानेन वा शक्यते शीभावपरिहारः कर्त्तुमिति दिक् ।

प्र० ७६—अयञ्च प्रश्नः १३ त्रयोदशप्रश्नैकदेशेनानुसन्धाय व्याख्येयः । अत्र मनोरमाशब्दरत्नयोस्तु ब्रह्माणीति प्रतीकमुपादाय "शार्ङ्गरवादि" गणे पाठात प्राप्तोऽपि जातिलक्षणो ङीष् बाध्यते । तथाच ङीन्प्रत्यय एवेति स्वल्पमुक्तम् ।

प्र० ७७—अस्य च प्रश्नस्य समाधिः पूर्वत्र ३६ षट्त्रिंशत्प्रश्न एव समुक्त इति तत एव तथैव चानुसन्धेयः ।

प्र० ७८—ननु "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति शास्त्रे व्यवायेऽपि इत्युक्त्या व्यवधानेऽपि णत्वस्वीकृत्या अव्यवहितांशं विनैव "तस्मिन्निति" परिभाषाया उपस्थित्या णत्वविधायकत्वेन नियामकत्वाभावाच्च कथमादर्शेनेत्यत्र णत्वमिति चेन्न ? तत्र "व्यवायेऽपि" इति योगस्य विध्यर्थत्वेऽपि "अट्कुप्वाङ्नुम्भिः" इत्यपरयोगविभागस्य साजात्यापेक्षनियमार्थत्वेन आक्षरसमाम्नायिकैर्व्यवधाने णत्वञ्चेदडादिभिरेवेत्यर्थेनादोषात् ।

एवञ्च नृणामित्यादौ तथैव णत्वसिद्धया "ऋवर्णान्नस्य णत्वम्" इति पृथग् वचनमपि न कर्त्तव्यम् । यद्यपि निर्दिष्टपरिभाषोपस्थित्या तादृशाव्यवहितत्वांशस्य "व्यवाये" इत्यनेनाविरोधायाडाद्यतिरिक्तपरत्वेन न दोषस्तथापि "ऋवर्णान्नस्य" इति वचनारम्भापेक्षया तत्र प्रकारे लाघवात् ।

वस्तुतस्तु—नियमेनान्यस्य व्यावृत्तिः क्रियते नतु स्वोयोद्देश्यतावच्छेदकावच्छिन्नस्येति समासातिरिक्तवाक्यव्यावर्त्तके "कृत्तद्धितसमासाश्च" इत्यत्र दृष्टत्वेनेह यन्नियमीयोद्देश्यतावच्छेदकमडादिव्यवहितनत्वन्तदवच्छिन्नातिरिक्तस्यैव व्यावृत्तिनियमेऽर्चनाद्दित्यादिव्यावृत्तावपि प्रकृते आदर्शेनेत्यत्र णत्वन्दुर्निवारम् । तस्मादत्र "चुट्तुलशर्व्यवायेन" इत्येव सिद्धे "अट्कुप्वाङ्" इत्युक्त्या एतैरेव व्यवाये नान्यैरित्यर्थो बोध्यते" इति भाष्यरीत्या वारणमेव तथ्यमिति दिक् ।

प्र० ७९—एष हि प्रश्नः २१ एकविंशतिप्रश्नवत् समाधेयः ।

प्र० ८०—एतस्य चोत्तरम् ६९ ऊनसप्ततितमप्रश्ने एव साधु निर्दिष्टमिति ततोऽनुसन्धाय लेख्यम् ।

प्र० ८१—एनदित्यादिसिद्धये "अन्वादेशे नपुंसके एनद् वक्तव्य" इति वार्त्तिककारः । तत्र विशिष्टेन "द्वितीयाटौस्स्वेनः" इत्यनेनैव सिद्धौ एतदस्येव प्रवर्त्तते लुका लुप्तत्वेऽपि च वचनसामर्थ्यात् प्रत्ययलक्षणम् इति प्रकाशकाराः । मनोरमाकारास्तु पूर्वोक्तसूत्रेणैनदादेश एव विधेयः पुल्लिङ्गादौ "त्यदादीनामः" इत्यनेनात्वे रूपसिद्धौ बाधकाभावात्; क्लीबे लुका लुप्तत्वेऽपि तकारोच्चारणसामर्थ्यात् "न लुमता" इत्यस्याप्रवृत्तिकल्पनात् ।

अएव भाष्ये "यद्येनत् क्रियते एनो न वक्तव्यः कथमेनमित्यादि त्यदाद्यत्वेन सिद्धम्" इति उक्तम् । नचैनदादेशे कृते पुल्लिगादौ "येननाप्राप्त"न्यायेन त्यदाद्यत्वबाधे कथं सिद्धिरिति वाच्यम् । नचोपसर्जनेऽत्वाप्रवृत्त्या तत्र चैनदादेश-

स्य सावकाशत्वमिति वाच्यम् ? उक्तभाष्यासङ्गतेः । क्लीबेऽमो लुकि अत्वाप्र
स्या चारितार्थ्यसम्भवेऽपि द्वितीयादिग्रहणवैयर्थ्यस्य ध्रौव्यात् । इति चेदत्रोच्यते-
"द्वितीयाटोस्सु" इत्यत्र आर्धधातुके इतिवद् विषयसप्तम्याश्रयणेन अस्य द्विती
यादिविषये पूर्वमेव प्रवृत्त्या बाध्यबाधकभावव्यवस्थितेः ।

नचैवमेतच्छ्रितक इत्यत्रापि एनदापद्येतेति वाच्यम् ? कपद्वाश्रयत्वेनान्तर
स्वमोर्लुग्विषये "नलुमता" सूत्रबाधात् तस्य चारितार्थ्यसम्भवात् । "द्वितीया
श्रित" इति समासप्रयुक्त "सुपो धातु" इति लुग्विषये बहिरङ्गपरिभाषाया लक्ष
तद्बाधे प्रमाणवैकल्यात् ।

भाष्यतत्त्वज्ञास्तु सूत्रेणैनदादेशविधाने तकारोच्चारणसामर्थ्येन नपुंसकलुक्
"अन्तरङ्गानपि विधीन्" इति न्यायेन बहिरङ्गपरिभाषाया लुग्विषये अप्रवृत्त
सामासिकलुकि सत्यप्येनदादेशापत्तेः । अत एव भाष्ये "सूत्रेणैनदादेशे-एतच्छ्रित
को न सिध्यत्येनच्छ्रितक इति प्राप्नोति" इति प्रतिपादितम् । पूर्वोक्तम् भाष्य
न्त्वेकदेशिनोक्तमिति ।

वस्तुतस्तु—एतच्छ्रितक इत्यादिप्रयोगाणामन्वादेशविषयेऽनभिधानमेव ।
वोक्तसन्देहे "यथालक्षणमप्रयुक्ते" इति भाष्योक्तेः । आर्धधातुके इत्यादौ भाष्य
रीत्या तथा विषयसप्तमीस्वीकारेऽपि प्रकृते तथात्वे प्रामाण्याभावात् । तस्मा
पृथग्द्वयोर्विधानमेव युक्तम् । अत एव "नपुंसकैकवचने एनद् वक्तव्यः कुण्डमा
प्रक्षालयैनत्" इति भाष्योक्तिस्साधीयसी संगच्छते । अत्र नपुंसकैकवचने इत्यु
क्त्याऽन्यत्रैनादेशविधानं स्पष्टमेवाभिलषितमित्यवधेयम् ।

प्र० ८२—प्रश्नश्चायं ३६ षट्त्रिंशत्प्रश्ने एव दत्तोत्तर इति तत एवानु
न्धाय लेख्यः ।

प्र० ८३—अत्र "अष्टन आ विभक्तौ" इत्यत्रत्यं व्याख्यानमुत्तररूपेण ९ पञ्च
प्रश्न एव कृतमिति तद् विलिख्य "यथालक्षणमप्रयुक्ते" इति भाष्यव्याख्यानं
अष्टात्रिंशत्प्रश्ने यत् कृतन्तदेवेहापि लेख्यम् ।

प्र० ८४—अयञ्च सम्पूर्णोऽपि प्रश्नः ६९ एकोनसप्ततितमप्रश्नोत्तरकाले
साधु व्याख्यातस्तत्रैवानुसन्धेयः ।

प्र० ८५—एतत्प्रश्नस्योत्तरन्तु षष्ठेन ६ प्रश्नेन तुल्यमिति तत्रैव देयम् ।

प्र० ८६—अयञ्च प्रश्नः प्रमादादिह समागतो वस्तुतस्त्वस्योत्तरन्तृतीयखण्डे कारकप्रकरणे दास्यमानमनुसन्धेयम् ।

प्र० ८७—क्लीवप्रकरणीयादेशविधायके "अतोम्" सूत्रे प्राञ्चः अमिति च्छित्त्वाऽमोऽम्विधानं लुग्बाधनार्थमिति व्याख्याय ज्ञानमादीनां सिद्धिम्प्रवदन्ति ।

वस्तुतस्तु "म्" इत्येवच्छेदः केवलम्मकारो विधेयो लाघवात्तथापि ज्ञानमादिसिद्धेरप्रत्यूहत्वात्। प्रथमैकवचने सोर्मादेशे द्वितीयैकवचने "आदेः परस्य" इत्यादेरादेशे परमकारस्य "संयोगान्तस्य झलो लोपात्" इति "संयोगान्त" सूत्रभाष्यानुसारेण "झलो झली" त्यतो झल्ग्रहणापकर्षेऽपि वाक्यभेदेन क्वचिदझल्यपि प्रवृत्तिस्वीकारेण लोपप्रवृत्तेः ।

नच केवल "म्" विधाने "सुपि च" इति दीर्घापत्तिः ? सन्निपातपरिभाषयैव वारणसम्भवात् । दीर्घविधौ "कष्टाय क्रमणे" इत्यादिनिर्देशान्न सेति तु वक्तुमप्यशक्यम् । "इनान्नलोपः" इत्यादिषु भाष्ये दीर्घत्वेऽपि तत्प्रवृत्तिप्रतिपादनात् । अतिजरसमित्यादौ तु न दोषः "अतोम्" इति बाधित्वा परत्वाज्जरसि सन्निपातपरिभाषया लुगप्रवृत्तौ सौष्ठवात् । प्रथमैकवचने तु उभयपक्षेऽपि साम्यमेव ।

परे तु द्वितीयैकवचनेऽपि अतिजरमित्येवेष्यते, "जराया जरस्" इति सूत्रेऽतिजरांसीत्यत्र "नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरस्"इति भाष्येण "टाङसिङसामिनात्स्याः" इति सूत्रकैयटानुसारेण च पूर्वविप्रतिषेधादन्तरङ्गत्वाद्वा "अतोमि"सन्निपातपरिभाषया जरसभावस्यैवौचित्यात् । अन्यथा "परिभाषया जरसादेशमनभ्युपयन् भाष्यकार" इति कैयटो व्याकुप्येतैव । नचात्र सन्निपातलक्षणविधिप्रवृत्तिं विनाप्यजादित्वस्य सुलभत्वेन कथम्भवदुक्तिरिति वाच्यम् ? दत्तोत्तरत्वात् ।

भाष्यकारास्तु परिभाषानित्यत्वेन समाधानस्यायुक्तत्वमङ्गीकृत्य तथात्वे दीर्घापत्तिञ्च वीक्ष्य मादेशे सन्निपातपरिभाषया सम्बुद्धिलोपाप्राप्तिभियाऽमित्येवच्छेद इति गर्जन्तीति ।

प्र० ८८—अस्य च प्रश्नस्य समाधिः ९ पञ्चमे स्फुटतर इति तथैवानुसन्धेयः।

प्र० ८९—अयमपि प्रश्नः ६९ एकोनसप्ततितमप्रश्नवदनुसन्धाय लेख्यः ।

प्र० ९०—एतस्योत्तरं ६ षष्ठप्रश्न एव साधु समाहितमिति तद् द्रष्टव्यम् ।

प्र० ९१—अस्य प्रश्नस्य कारकप्रकरणीयत्वेन तृतीयखण्डे दास्यमानोत्तरत्वम्। अत्र प्रक्षेपात् समागतः ।

प्र० ९२—अयमपि ९१ एकनवतितमप्रश्नवदनुसन्धास्यमानः ।

प्र० ९३—एष च प्रश्नः कारकाधिकारीयस्तृतीयखण्डे साधु रूसाधास्ये इतीह प्रक्षिप्तोऽवगन्तव्यः ।

प्र० ९४—एतत्प्रश्नस्योत्तरन्तु ७८ अष्टासप्ततितमप्रश्नवद् विधेयम् ।

प्र० ९५—सर्वनामसंज्ञानिषेधकं "द्वन्द्वे च" इति सूत्रम् । तत्र द्वन्द्वशब्दस्य समासाभिधेयत्वेन समासस्यानेकपदवत्त्वेन कारकाणां क्रिययैवान्वयाच्च समुदायस्यैवायं निषेधक इति सिद्धान्तपथः । नच विद्यतिक्रियाध्याहारेण द्वन् विद्यमानानि यानीति रीत्या अवयवानामपीति वाच्यम् ? गौरवात्, निषेध्याय भवति क्रियाया एव प्राधान्येन तदन्वयस्यैव युक्तत्वाच्च । अवयवमात्रस्य निषे प्रयोजनं सर्वनामाव्ययसंज्ञायाम् इति भाष्यबलेन तदन्तस्य सर्वनामत्वे वर्णाश्रमे राणामिति भाष्यप्रयोगानुपपत्तेश्च । नह्यत्र सर्वार्थवाचकत्वं नास्तीति वक्तुं शक्यम् प्रमाणाभावात् लोकव्युत्पत्तिसिद्धार्थस्य निषेधासम्भवाच्च । अप्रक्रान्तत्वादवि यत्वाच्च सर्वादिपाठोऽप्यस्य निषिध्यत इतीदमप्युक्तिविरुद्धम् । अवयवनिषे फलाभावाच्च न्यायबलात् फलबलाच्च समुदायस्यैव ग्रहणात् ।

ननु त्वच्छब्दस्तान्त इति पक्षेऽवयवनिषेधेऽप्यवयवगतकुत्साबोधकाकज्व्याप त्तेर्दक्षिणोत्तरपूर्वाणामित्यादौ कप्रत्यये समुदायसंज्ञाभावस्य फलत्वमिति चेन्न न्यायविरोधापत्तेः शास्त्रस्याल्पविषयतापत्तेश्चेति मूलकाराः ।

शब्दरत्नकृतस्तु द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाभाववत् कुत्सादिवि वक्षाया अभावात् समुदाये तद्विवक्षायां समुदायोत्तरप्रत्ययेनावयवगतकुत्सादे प्यभिधानात् "उक्तार्थानामप्रयोग" न्यायेनावयवात्तदनुत्पत्तिरिति चायुक्तम् अत एव "विभाषा जसि" इति सूत्रभाष्ये "समुदायकुत्साविवक्षायामकज् भव ति" इति सङ्गच्छते । किञ्च "विभाषा जसि" इत्यनेन फलाभावेनावयवनि धाभावेऽपि तत्साहचर्येणार्थाधिकारानुरोधात् अस्यापि अवयवनिषेधकत्वाभावः एवञ्च समुदायनिषेधे द्वन्द्वस्य संज्ञिनोऽधिकरणत्वविवक्षया सप्तमी । अथवा "अक स्वरौ तु कर्त्तव्यौ प्रत्यङ्गम्मुक्तसंशयौ" इति भाष्योक्तेतत्प्रकरणविषयस्मृत्यन्त तद्विषये "न बहुव्रीहौ" इत्येतत्साहचर्येण वा एतत्प्रकरणस्थसप्तमीनिर्देशानाम्प्र मार्थकत्वसौष्ठवात् । तथाच प्रथमार्थे सप्तमीयं वेति न दोषः ।

एवञ्च सप्तमीनिर्देशसामर्थ्याद् बहुलक्ष्यसंस्कारानुरोधाच्च विद्यमानानोत्यध्य

हारेण समुदायस्यावयवानाञ्च निषेधोऽयमिति वदन्तः पराभूताः। इतरकश-ब्देन समासेऽतिभवकानित्यादिवत् वर्णाश्रमेतराणामित्यादावकचः श्रुतेर्दुर्वारत्वापत्तेरिति दिक्।

प्र० ९६—यण्विधायके "एरनेकाच" इति सूत्रे पूर्वसूत्रात् "अचि श्नु" इत्यतत्सञ्ज्ञिप्रयोगशिष्टत्वेऽपि स्वरितत्वप्रतिज्ञावलात् श्नुभ्रुवोरिवर्णासम्भवाच्च केवलधातुपदमनुवर्त्तत आवर्त्तते च। एवञ्च लक्ष्यानुरोधात् संयोगेनाङ्गेन च तद् विशिष्यत इति धात्ववयवेत्याद्यर्थसम्पत्तिः। तत्र संयोगस्य धातुना विशेषणात् उन्न्यावित्यादि सिध्यति। अङ्गविशेषणात्तु हरी हरीन् इत्यादिसिद्धिः। अत एव "स्वरपदपूर्वोपधस्य" इति वार्त्तिकं संगच्छतेतराम्। धात्वङ्गाविशेषणत्वे धात्ववयवसंयोगपूर्वको न भवति य इवर्णस्तदन्ताङ्गस्येत्यर्थे प्रध्यमित्यादाविव पूर्वरूपादिकम् प्रबाध्य यणापत्तेरिति मनोरमाकाराः।

अत्र शब्दरत्नकारास्तु, नच धात्ववयवसंयोगस्य धात्ववयवेकार एव सम्भवेन संयोगवद् विप्रयोगस्यापि विशेषावगतिहेतुभूतत्वेन तद्भिन्नस्यापि धात्ववयवस्यैव ग्रहणाद् दोषाभाव इति वाच्यम्? तन्त्रीरित्यादौ धात्ववयवसंयोगपूर्वस्याधात्ववयवस्यापि सम्भवेन तत्त्वस्य तथा कल्पयितुमयुक्तत्वात्। नच "उत्सर्गसमानदेशा अपवादाः" इति न्यायेन न पूर्वोक्तेषु दोष इति वाच्यम्? अङ्गांशे तदसम्बन्धे हरिभिरित्यादावपि यणः प्राप्त्या "येन नाप्राप्त" न्यायविषयाभावेन तेनेयङाद्यपवादत्वस्यैवाभावात्। नच प्रत्यासत्त्या "इको गुणवृद्धी" इत्यादिनिर्देशेन धात्ववयवसंयोगभिन्नसंयोगपूर्वस्य धात्ववयवस्य ग्रहणे हरी इत्यादौ दोषाभाव इति वाच्यम्? स्पष्टप्रतिपत्तये आवृत्तेः सुस्थत्वादिति दिक्।

प्र० ९७—अत्र यत् पृच्छ्यते तत् पञ्चमे ९ प्रश्ने एव दत्तोत्तरमिति तत एवानुसन्धेयम्।

प्र० ९८—वैकल्पिकेत्त्वविधायके "उदीचामातः स्थाने" इति सूत्रे पूर्वस्मात् "न यासयोः" इत्यतो नेत्यनुवर्त्य यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्योदीचाम्मते नेत्त्वमिति तदर्थः। साङ्काश्यिकेति सिद्ध्यर्थञ्च सूत्रे आतः इति। नच यथाऽयमकारो नाकारस्थानिकस्तथा स्त्रीप्रत्ययस्थानिकोऽपि इति इत्यङ्ग विकलतेति वाच्यम्? अत एवात्ग्रहणात् स्त्रीलिङ्गनिर्देशबलात् स्त्रीवाचक अकारस्स्त्रीप्रत्यय एवेति लाभात्। असति तत्रापत्तिर्ध्रुवैव। ननु यकपूर्वा-

न्याः स्थाने इति स्थाने शब्दे जागरूके कथमवयवषष्ठीत्वङ्कल्प्यमिति । नच वुञः स्थानेऽयमिति वाच्यम् ? अकेति समुदायस्य तथात्वेऽपि अकाररूपावयवत्वस्या-तथात्वात् । वुञो यकपूर्वत्वाभावाच्च । किञ्च प्रतिपदोक्तस्य लाभे अन्यार्थविहित-स्य वुञः प्रसङ्गाभाव इति न साङ्काशियकेत्यादौ दोष इति चेन्न ? एवं सति आ-दूग्रहणस्य स्पष्टप्रतिपत्त्यर्थमुक्तेः ।

प्र० ९९—एष हि प्रश्नः पूर्वत्र ३६ षट्त्रिंशप्रश्नादौ बहुवारमुक्तोत्तरमिति तत एवानुसन्धेयः ।

प्र० १००—अस्योत्तरं वैशद्येन ११ एकविंशे प्रश्न एव निरूपितमिति तत एवावगन्तव्यम् ।

प्र० १०१—एतस्याप्युत्तरम् ३२ द्वात्रिंशत्तमे प्रश्ने साधीयो निरूपितमिति ततोऽनुसन्धीयताम् ।

प्र० १०२—एष प्रश्नो हि ६९ एकोनसप्ततितमे प्रश्ने सामःस्थानित्वनिर्देश-काले साधु व्याख्यात इति तथैवोत्तरणीयः ।

प्र० १०३—प्रश्नस्य चास्योत्तरं ६ षष्ठप्रश्नवदनुसन्धीयताम् ।

प्र० १०४ अष्टाविंशतितम २८ प्रश्नोत्तरकाले साध्वयम् प्रश्नोऽपि व्याख्यात इति तथैवावगन्तव्यः ।

प्र० १०५ एतत्प्रश्नस्योत्तरं ३४ चतुस्त्रिंशत्प्रश्न एव सूक्तमिति ततोऽवगम्यताम् ।

प्र० १०६—अयञ्च प्रश्नस्सर्वथाऽपि २३ त्रयोविंशतितमे प्रश्ने समाहित इति तथैव समाधेयः ।

१०७—अयञ्च प्रश्नस्सर्वथैव १८ अष्टादशे प्रश्ने समाहित इति तथैव समाधेयः ।

प्र० १०८—एष प्रश्नो हि ८१ एकाशीतितमे साधु समाहितोऽवगन्तव्यः ।

प्र० १०९—एष प्रश्नोऽपि १०२ द्व्यधिकशतप्रश्नोत्तरेण तुल्यः ।

प्र० ११०—ननु शैलपुत्री, पुत्रीव हर्षं हृदये तनोति, कुर्वे तदुर्वीपतिपुत्रि सर्वम्, इत्यादयः कथं सिद्ध्यन्तीति चेत् न ? शार्ङ्गरवादिगणे पुत्रशब्दस्यापि पाठेन ङीनि तेषां सिद्धेरक्षतेः । नच पुत्रशब्दः कन्यायान्न लोके प्रयुज्यत इति तथा-त्वसङ्गतिर्नैवेति वाच्यम् ? अमरकारेण "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रि-

यान्त्वमी । आहुर्दुहितरं सर्वे" इत्युक्तत्वात् । अत एव "प्रत्ययस्थात्" इतीत्वप्रकरणे "सूतकापुत्रिकावृन्दारकाणांवे"ति वार्त्तिकं सङ्गच्छते ।

नच केवलपुत्रशब्दः स्त्रियां न वर्त्तते इति हरदत्तमतं श्रेय इति वाच्यम् ? इत्वप्रकरणस्थत्वग्रन्थविरोधात् तन्न भाष्यादिविरोधसम्भवाच्चोपेक्षणीयत्वात् । ननु "कारे सत्यागदस्य" इति सूत्रे "सूतोग्रराजभाजकुलमेरुभ्यो दुहितुःपुत्रड् वा" इति वार्त्तिकम् किमर्थम् । नच स्वरार्थन्तदिति वाच्यम् ? टित्वान्ङापि कृते उदात्तनिवृत्तिस्वरेणान्तोदात्ते ङीन्नन्तेन तत्पुरुषेऽपि समासस्वरेणान्तोदात्त एवेति स्वरे भेदाभावात् । नच शार्ङ्गरवादौ पुत्रशब्दपाठः प्रक्षेपान्न सिद्धान्तभूत इति वाच्यम् ? पुत्रीव हर्षमित्यादिप्रयोगासङ्गतेः । कैयटहरदत्ताद्युक्त "सूतकापुत्रिका" इति वार्त्तिकप्रश्लिष्टाकारविधानवैयर्थ्याच्च ।

एवञ्च सूतादिपुंशब्देभ्यः परे ङीन्नन्ते तत्पुरुषे "पुत्रः पुम्भ्यः" इत्यनेन पुंशब्दोकारोदात्तत्वम् । पुत्रडादेशे तु न तत्प्रवृत्तिः सानुबन्धकत्वादतस्तत्रोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमिति ।

नच "नादिन्याक्रोशे" पुत्रटि प्रवृत्तिर्माभूदित्येव फलमिति वाच्यम् ? एतत्सम्बन्धयचः परस्य यर आदिनीशब्दपरत्वासम्भवात् । स्थानिवद्भावेन पुत्रटि दुहितृशब्दत्वमादाय "न षट्स्वस्रादिभ्यः" इति निषेधोऽपि न ? तस्य "ऋन्नेभ्य" इति ङीम्मात्रबाधकत्वात् टित्वसामर्थ्याच्च । पूर्वोत्तरसाहचर्य्यात् "कारे सत्या" इत्यत्रोपसंख्यानाच्चास्य वार्त्तिकस्य तत्पुरुषे एव प्रवृत्तिस्वीकारात् । एवञ्च टितः उपसर्जनत्वेन तत्र ङीपोऽप्राप्तेर्बहुव्रीहौ ङीबर्थमिदमिति युक्तिः परास्तेति दिक् ।

प्र० १११—ननु "तदोः सस्सावनन्त्ययोः" इति सूत्रेऽनन्त्यग्रहाभावेऽपि स इत्यत्रान्त्यस्य विद्यमानत्वेऽपि "हल्ङ्यादि"लोपे रुत्वविसर्गयोरिष्टसिद्धौ तद्व्यर्थमिति चेन्न ? त्यदादीनां सम्बोधनं नास्तीत्यस्य प्रायिकत्वेन हे स इत्यत्रान्त्यस्य शब्दान्तरप्राप्त्याऽनित्यत्वेन परत्वात्तस्य बाधेनोभयोरपि सत्वे "सकृद्गतौ विप्रतिषेधे यद् बाधितम्" इति न्यायेन पुनरत्वाप्रवृत्त्या हल्ङ्यादिलोपे रुत्वविसर्गयोरिष्टरूपासिद्धेः । स्त्रीत्वे सेत्यस्यासिद्ध्यापत्तेश्च । अतुसाहचर्य्येण प्रतिपदोक्तस्यासन्तस्य ग्रहणेन "अत्वसन्तस्य" इति दीर्घो न शङ्कनीयः ।

ननु सामान्यापेक्षमन्तरङ्गं विशेषापेक्षं बहिरङ्गम् इति रीत्या प्रत्ययसामा-

न्यापेक्षत्वेनान्तरङ्गपरिभाषयाऽत्वे तद् व्यर्थमेवेति चेन्न ? एतत्सामर्थ्यादेव ताद्द-शान्तरङ्गत्वस्यानाश्रयणात् ।

यदि तु कृताकृतप्रसङ्गित्वेन नित्यत्वात् पुनःप्रसङ्गविज्ञानन्यायेन च "त्यदा-दीनाम" इत्यत्त्वेनैवेष्टसिद्धौ न बाधकमित्युच्यते तदाऽनन्त्ययोरिति शक्यत एव त्युक्तुम् ।

नचैवम् एतत्सामर्थ्यादेवात्र सकृद्गतिन्यायमात्रस्याश्रयणम् शब्दान्तरस्य प्राप्त्या चात्वस्यानित्यत्वमिति वाच्यम् ? तथापि "तदोः सः" इत्यस्यानन्तरम् "अदसः" इति योगेन अदस एव दकारस्य नान्यस्येति नियमेनादोषात् । नचै-वम् द्वीयतेः क्विपि द्व इत्यापद्येत इष्यते तु स्त्र इति वाच्यम् ? गौणे द्वयोरपि प्रवृत्तेरनिष्टत्वेनेष्टापत्तेः ।

वस्तुतस्तु "यथालक्षणमप्रयुक्ते" इति भाष्यरीत्यैतादृशामनभिधानमेवेति दिक् ।

प्र० ११२—प्रिया अष्टौ यस्येति बहुव्रीहिनिष्पन्नप्रियाष्टन्शब्दाच्छसि "अल्लो-ऽपोऽनः"इत्यल्लोपस्य आश्रितपञ्चमीसमासकेन "अचःपरस्मिन्"इति स्थानिवद्-भावात् प्राप्तमपि ष्टुत्वन्न भवति । नच "पूर्वत्रासिद्धीये न"इति प्रवृत्त्या कथं स्थानिवत्त्वमिति वाच्यम्?तस्य "तस्य दोषः संयोगादिलोप" इत्यादिनाऽप्रवृत्ति-बोधनात् ।

नच साहचर्यपरिभाषया तत्र निषेधप्रतिप्रसवे "रषाभ्याम्" इतिप्रतिपदोक्त-णत्वस्यैव ग्रहणमिति नेह प्रवृत्तिरिति वाच्यम् ? यथोत्तरम् मुनीनाम्प्रामाण्यानु-रोधात् "अपदान्तस्य मूर्धन्यः" इत्यनुवर्त्य "रषाभ्याम्" इति सूत्रे णग्रहणस्य भाष्ये प्रत्याख्यानात् णत्वविषये परिभाषयोर्द्वयोरप्रवृत्तिकल्पनात् ।

नच शब्दकौस्तुभे "तस्य दोष इत्यत्र णत्वग्रहणम्मास्तु"इति सिद्धान्तित-त्वेन कथन्तत्त्वमिति वाच्यम् ? कार्यकालपक्षे बहिरङ्गत्वाल्लोपस्यासिद्धत्वेन ष्टुत्वा-प्रवृत्ते रूपसिद्धावक्षतेः । नच यथोद्देशपक्षमाश्रित्य वेभिदितेत्यादीनामन्यथासिद्धिं निरूप्य पञ्चमीसमासप्रत्याख्यानस्य भाष्येङ्गितत्वेन कथं सिद्धिरिति वाच्यम् ? फलै-क्याय णग्रहणप्रत्याख्यानपरभाष्यसंगतयेऽत्र कार्यकालपक्षस्यैवाश्रयणीयत्वादिति ।

वस्तुतस्तु—अपीपचन्निंत्याद्यर्थम् पञ्चमीसमासस्याभीष्टत्वेन तदुक्तेरसम्भवा-त् । हेगौग्त्यादिभाष्योदाहरणेन "निष्ठायां सेटि" इति सूत्रे सेड्ग्रहणेन सोऽनित्य इति पक्षेऽपि न दोषः ? लक्षणैकचक्षुष्कत्वे तादृशसिद्धान्तानभ्युपगमात् ।

प्र० ११३—यथा लुगनुटौ "गौणमुख्य" न्यायेन मुख्य एव प्रवर्तेते तथैव "अष्टाभ्यऔश्" इति बहुवचनान्तनिर्देशसामर्थ्येन औश्त्वमपि न गौणे प्रवर्तत इति। अन्यथा अष्टा औश् इत्याद्येकवचनान्तमेव कृतात्वानुकरणेऽपि निर्दिशेत्। अत एव हलीत्यपकर्षे षट्संज्ञासुत्रेण प्रियाष्टानौ प्रियाष्टान इत्येव प्राप्नोति नतु प्रियाष्टौ प्रियाष्टा इत्याद्याशङ्क्य "यथालक्षणमप्रयुक्त" इति समाधानभाष्यव्याख्याकारःकैयटोऽपि सङ्गच्छते। अत एव वामनाचार्योऽपि प्रियाष्टान इत्यत्रात्वस्याभावान्नौश्त्वमिति व्याचक्षाणस्संगच्छत इति मनोरमाग्रन्थः।

शब्दरत्नकारास्तु—"तिसृभ्यो जसः"इत्यादाविव प्रयोगबाहुल्येनैव बहुवचननिर्देशस्य सङ्गतौ न तादृशज्ञापने प्रमाणम्। अत एव प्रकृतसूत्रे "विभाषा आत्वं यदयमात्वभूतस्य ग्रहणं कुरुतेऽष्टाभ्य इति इतरथाऽष्टन इत्येव ब्रूयात्" इति भाष्यमपि संगच्छते। अन्यथा कैयटरीत्या बहुवचननिर्देशस्य सार्थक्येन भाष्यस्यासङ्गत्यापत्तेः।

वस्तुतस्तु "नैव वा लक्षणमप्रयुक्ते प्रवर्त्तते प्रयुक्तानामेव लक्षणेनान्वाख्यानात्" इति कैयटकृतद्वितीयव्याख्यानुसारेण प्रियाष्टादीनामनभिधानमेव। एवञ्च "प्रयुक्तानामिदमन्वाख्यानम्" इत्यादिभाष्यरीत्या व्याख्येयमेव युक्तंतिलक्ष्यैकचक्षुष्कतया च भाष्यकारस्येतिदोषाभाव इति दिक्।

प्र० ११४—"अष्टन आ विभक्तौ" इति सूत्रे "हलोति उभयोःशेषः" इति भाष्यप्रामाण्येन "रायो हली" ति सूत्राद्धलीत्यपकृष्य प्राङ् नुटि ततःसन्निपातपरिभाषाया अनित्यत्वाश्रयणेनाष्टानामित्यत्रात्वं सिध्यति। नच नुडागमे "नोपधायाः" इति दीर्घे नुड्दृष्ट्या नलोपस्यासिद्धया तदप्रवृत्त्या नलोपद्वाराऽष्टानामिति सिद्धौ किमिति सन्निपातपरिभाषाया अनित्यत्वस्वीकारेणेति वाच्यम्? परिभाषया तया हे गौरीत्यादावतिव्याप्तिप्रतिपादकभाष्यप्रामाण्यानुसारेणातिदैशिकसन्निपातविघाताभावस्य अनाश्रयात्। अन्यथा सम्बुद्धिलोपेऽपि स्थानिवत्वेन भाष्यासङ्गतिर्ध्रुवैव स्यात्।

नच सन्निपातस्याशास्त्रीयत्वेन कथं स्थानिवत्त्वमिति वाच्यम्? तथा सति भवदुक्तासिद्धत्वस्याप्यप्रवृत्तेः एवञ्चात्वमेव युक्तमिति। असति हलीत्यपकर्षे तु अन्तरङ्गत्वेन षट्त्वसम्पत्तावपि एकदेशविकृतन्यायेन सम्पन्न आत्वे नुण् न स्यात्।

वस्तुतस्तु—नान्तसंख्यावाचकत्वं षट्त्वपरिचायकमात्रमिति तस्य विशेषण-

त्वाभावात् अनल्त्वेन च तत्प्रयुक्तनुडादेः स्थानिवत्त्वेन यथोद्देशपक्षे नुटस्सिद्धौ मुख्यत्वेनावगते कार्यकालपक्ष एवाष्टानामित्यादिसिद्धये हलीत्यपकर्ष इति दिक्।

प्र० ११५—ननु "श्वन्नुक्षन्" इति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्येति "केशात्" सूत्रस्थकैयटरीत्या "अर्वणस्तृमघोनश्च न शिष्यं छान्दसं हि तत्। मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्" इति वार्तिकरीत्या च "मघवा बहुलम्" इति त्रादेशस्य प्रत्याख्यानात् फलभेदवारणाय बहुलग्रहणादत्र दीर्घे विधीयमाने "संयोगान्तस्य लोप" इत्यस्यासिद्धत्वन्न भवतीति कल्पनया मघवानिति रूपसिद्धेः "मघवा बहुलम्" इति सूत्रं किमर्थम्।

एवमेव "हविर्जक्षिति निश्शङ्को मखेषु मघवानसौ" इति भट्ट्यादिप्रयोगा अप्युपपद्यन्ते। कनिन्नन्तत्वादव्युत्पन्नत्वाद् वा अन्तोदात्तस्य मघवन्शब्दस्य स्वीकारात्। नचोज्ज्वलदत्तादिग्रन्थानुसारेणाद्युदात्तत्वमस्येति वाच्यम्? "उक्षा समुद्रो अरुणः सुपर्णः" इत्यादिमन्त्रेषूक्तसूत्रोपात्तानामुक्षन्नादीनामन्तोदात्तत्वस्य निर्विवादतया तस्यैव सौष्ठवात्। मतुप्प्रत्ययान्तस्य छान्दसत्वे विनिगमनावैकल्यात् तत्रापि छान्दसत्वान्न दीर्घ इत्युक्तभाष्याशयवर्णनमसंगतमेव। भट्टिकारादिप्रयोगविरोधाच्चेति मनोरमाकृतः।

शब्दरत्नकारास्तु मघवन्शब्दस्य लोकेऽसाधुत्वमेव? सामान्यतः प्रवृत्तवार्त्तिकस्य कथञ्चित् सङ्कोचे प्रमाणविरहात्। एवञ्च "निरङ्कुशाः कवय" इति न्यायेन भट्ट्यादिप्रयोगाणां "केशाद् वोऽन्यतरस्याम्" इति सूत्रस्थकैयटस्य च वार्त्तिकादिग्रन्थविरोधादप्रमाणत्वमेवेति दिक्।

प्र०११६—प्रश्नश्चायम् १०१ एकोत्तरशतप्रश्नवदनुसन्धाय समाधेयो नान्यथा

प्र०११७—आत्मनः पन्थानमिच्छतीति विगृह्य क्विब्लोपयलोपेषु पथीशब्दादेकदेशविकृतन्यायेनात्वे न्थादेशे च पन्था इति रूपम्। आवादिविभक्तिषु "इतोऽत्सर्वनामस्थाने" इत्यस्य ह्रस्वमात्रविषयकत्वेनाप्रवृत्त्या परत्वान्नित्यत्वाच्च न्थादेशे यण्विधायकस्य "एरनेकाचोऽसंयोगपूर्वस्य" इत्यस्याप्राप्तेरियङि पन्थियावित्यादि सिध्यति।

नचेयङि कर्त्तव्ये नलोपासिद्धिः? स्वरादिसाहचर्य्येण सुप्त्वतद्व्याप्यधर्मावच्छिन्ननिमित्तताकविधेरेव "नलोपः सुप्" इति सूत्रीयसुब्विधिपदार्थस्वीकारात्। अत्र "द्वयोरेकस्य निर्द्धारणे" इति निर्देशानित्यत्वज्ञापिता "अङ्गकार्यें" इतिन

प्रवर्त्तते । नचेयङि सति दीर्घैकारानुरलक्ष्येशास्त्वन्दुर्वारमिति वाच्यम् ? सन्निपात-परिभाषयैव तस्य वारणसम्भवात् । अन्तरङ्गपरिभाषा च "तदोः सः, अदसः" इत्यादिभाष्यविरोधान्न प्रवर्त्तते । न च "पथिमथि" इत्यत्रनान्तप्रकृत्यनुकरणत्वेन नात्वाद्यप्रवृत्तिर्वक्तुं शक्या ? एकदेशविकृतस्याश्रयणात्। नो चेत् पन्था इत्यादावपि तदापद्येत । नच कार्यकालपक्षे "क्वौ लुप्तम्" इत्यस्यास्वीकारेण नान्तत्वाभावेन "नः क्ये" इति नियमेन पदत्वाभावात् निषेधाप्रवृत्त्या स्थानिवत्त्वेनात्वादिकं कथमिति वाच्यम् ? तथात्वे यणो दुर्वारत्वापत्तेः। 'ऋत्यात्' सूत्रे कैयटेन "क्वौ लुप्तम्" इत्यस्य सादरस्वीकाराच्च । परे तु तथा सति "इतोऽत्सर्वनामस्थाने" इति सूत्रे इदित्यत्र तपरकरणेनात्वादिविघटकस्य नीतिमतोऽत्राप्रवृत्तेः ।

एवञ्च सुखसुखार्थन्तपरकरणमित्यादयो ग्रन्थाश्चिन्त्यप्रयोजना एवेति नात्वन्यादेशयोः कुतोऽपि प्रतिबन्धसम्भवः इति दिक् ।

प्र० ११८—अयञ्च प्रश्न २९ ऊनत्रिंशत्प्रश्ने ५४ चतुष्पञ्चाशत्प्रश्ने च साधु व्याख्यात इति ततोऽनुसन्धेयः ।

प्र० ११९—"त्रिचतुरोः स्त्रियाम्" इति सूत्रे स्त्रियामिति "श्रुतानुमितयोः श्रुतसम्बन्धो ज्यायान्" इति न्यायेन नाङ्गस्येत्यनेन विशिष्यते किन्तु त्रिचतुर्भ्यामेव । तथाच स्त्रियां वर्त्तमानयोरेनयोरित्यर्थेन बहुव्रीहौ प्रियत्रिशब्दे न तिस्रादेशः । स्त्रिया अन्यपदार्थत्वेन बहुव्रीहिरूपमङ्गन्तत्र वर्त्तते त्रिशब्दस्तु पुन्नपुंसकयोरेवेति तिस्रादेशो नेत्यादि । नच जहत्स्वार्थापक्षे त्रिशब्दस्यानर्थकत्वेन भूतपूर्वगत्या पुंसि क्लीबे च सत्त्वेनाङ्गस्य स्त्रियां वर्त्तमानत्वेन सामञ्जस्येऽपि अजहत्स्वार्थायाम् अन्यपदार्थस्य त्रिशब्देनाप्यभिधानात् स्त्रियां पुन्नपुंसकयोश्चापि वृत्तित्वेन पुन्नपुंसकयोरेव वर्त्तत इत्युक्तिः कथं सङ्गच्छत इति वाच्यम् ? तथापि तत्पक्षे स्त्रीनिष्ठसंख्यायां वर्त्तमानयोस्त्रिचतुरोरित्यर्थेन तत्र तिस्रादेशो वार्य इति सिद्धान्तात् ।

अत्र शब्दरत्नकारास्तु "जहत्स्वार्था तु तत्रैव रूढिर्यत्र विरोधिनी" इत्यभियोगात् रूढेरविरोधित्वेन जहत्स्वार्थाया असम्भवात् अजहत्स्वार्थायां स्वार्थपुमादिवृत्तित्वस्य त्रिशब्दस्यान्यपदार्थस्त्रियां वृत्तेर्मूलोक्तस्यायुक्तत्वात् ।

तत्रान्यपदार्थस्य समुदायशक्यत्वेऽपि तद्घटकत्वाभावेन त्रिशब्दस्यापि तथात्वं वक्तुमर्हमिति वाच्यम् ? जहत्स्वार्थायामपि तथात्वोक्तौ बाधकाभावात् ।

स्त्रीवाचकतापर्यायन्त्यधिकरणत्वविवक्षणे तु अजहत्स्वार्थत्वेऽपि तत्त्वसाम्यात् इति प्रसादकारोक्तमेव ज्याय इति दिक् ।

प्र० १२०—एतस्योत्तरं ६० षष्टितमे प्रश्ने साधु निरूपितमिति तत एवानुसन्धीयताम् ।

प्र० १२१—अस्योत्तरं ८७ सप्ताशीतिप्रश्नवद् बोध्यम् ।

प्र० १२२—एतस्य चोत्तरम् ९६ षण्णवतितमप्रश्नवद् ज्ञेयम् ।

प्र० १२३—ननु "अच्च घेः" इति सूत्रे औतस्तित्वं किमर्थमित्याशङ्क्य "इदमस्थमुः" इति सूत्रीयोकारग्रहणस्य मकारपरित्राणार्थत्वेन "न विभक्तौ" इत्यस्यानित्यत्वज्ञापनात् "तित्स्वरितम्" इति स्वरितत्वं सिद्ध्यति। इति प्राचाम्मतन्न युक्तम् ? "ङेरौतस्तकार उच्चारणार्थः" इति स्वपरग्रन्थविरोधात् । युक्तं चोच्चारणार्थत्वमेव "स्तीर्णे बर्हिषि समिधाने अग्नौ" इत्यादौ स्वरितत्वादर्शनात् ।

यत्तु अति तपरकरणेन बुद्धावित्यत्र टाप् नेति सफलन्तदिति तच्चिन्त्यमेव ? तपरकरणेन टापा सह दीर्घबाधेऽपि टाब्बाधस्याप्रामाणिकत्वात् । तत्र टाबभावस्तु सन्निपातपरिभाषयाऽपि साधयितुं शक्यते । एवमेवातोऽपि तपरकरणमुच्चारणार्थमेवेति मनोरमाकाराः ।

अत्र शब्दरत्नकारास्तु उच्चारणार्थकानामपि इत्संज्ञालोपावन्तरा न निवृत्तिरिति सिद्धान्तस्य भाष्याद्यनुकूलत्वेन कथितपूर्वं स्थवीय एव । स्वरितत्वापत्तिस्तु प्रत्ययाप्रत्ययन्यायेनैव सिद्धे "तितिग्रहणं कर्त्तव्यम्" इति वार्त्तिकेनौपदेशिकप्रत्ययत्ववत्येव स्वरितत्वप्रवृत्तिरिति प्रकृते आदेशे [ औति ] दकारस्थानिकचर्त्त्वनिष्पन्नतकारस्य सत्त्वेन वारयितुं शक्या । अत एव भाष्ये औकारं ङितमाश्रित्यादिति प्रत्याख्यातम् । नहि तदा तित्त्वमस्ति । नच ङित्वे ङिशतौ तिलोपापत्तिः ? तादृशभाष्यप्रामाण्येन तस्य सप्तम्यामनभिधानात् । उच्चारणार्थं इत्यस्य च वर्णान्तरोच्चारणे मुखस्य क्लेशवारणार्थो नत्वन्यफलार्थं इति सिद्धान्तार्थात् ।

प्र० १२४—अयञ्च प्रश्नः ४९ एकोनपञ्चाशत्तमे प्रश्ने साधु निरूपित इति तत एवानुसन्धेयः ।

प्र० १२५—अयञ्च ३६ षट्त्रिंशत्तमे प्रश्ने साधूत्तरित इति तथैवेहाप्युत्तरणीयः ।

प्र० १२६—एतस्योत्तरं २ द्वितीयप्रश्नवदनुसन्धेयन्नान्यथा ।

प्र० १२७-एतस्योत्तरं १५ पञ्चदशे प्रश्ने यथावदुक्तमिति तथैवावलोक्यताम् ।

प्र० १२८—अयं हि खलु ७८ अष्टासप्ततितमे प्रश्ने साधु समुल्लिखित इति इहापि तथैव लेख्यः ।

प्र० १२९—अयञ्च ९५ पञ्चाधिकनवतितमे प्रश्ने साधूत्तरेण विभूषित इति तथैव समाधीयतान्नातो मयेह लिख्यते ।

प्र० १३०—अनोऽकारस्य लोपविधायकस्य "अल्लोपोऽनः" इति सूत्रस्य अन्नन्तस्य भस्याङ्गस्याकारस्य लोप इत्यर्थः प्राचामभिमतो न युक्तः ? तक्षण इत्यादौ तकारोत्तरवर्त्यकारस्यापि लोपापत्तेः । नच भस्याङ्गस्यानोऽकारस्य लोप इत्यर्थे न दोष इति वाच्यम् ? तथासति मनसेत्यादावपि लोपस्य दुर्निवारत्वापत्तेः । नच तन्त्रादिनाऽन्नन्तस्य लोप इत्यर्थेन वारणसम्भव इति वाच्यम् ? अनस्तक्षणेत्यादौ तथात्वेतिव्याप्त्यापत्तेः ।

एवञ्च भाधिकाराक्षिप्तः प्रत्ययविशेषोऽङ्गं चेति द्वयमप्यतो विशेषणम् । अन्र तु अकारस्येति नाङ्गावयवादिमूलोक्तार्थं हानिरिति मनोरमाकाराः ।

शब्दरत्नकारास्तु अनस्तक्षणेत्यादौ अनुवादेऽपि "तस्मिन्" इति परिभाषोपस्थित्या न दोषः । अथ च "अन्त्यविकारेऽन्त्यसदेशस्य" इति परिभाषया वा नानस्तक्षणेत्यादौ दोषसम्भवः । परिभाषा तु "सान्तमहत" इत्यादावनेकत्रुटापेक्षया लाघवेन समाश्रयणीयैव। नच "न सम्प्रसारणे सम्प्रसारणम्" इति सूत्रे भाष्ये खण्डितैवेति वाच्यम् ? एतत्सूत्रसाध्यानि प्रयोजनानि नैतस्याः परिभाषायास्सम्भवन्तीति तदभिप्रायवर्णनात् । अत एवान्यत्र भाष्ये "यान्येतस्याः प्रयोजनानि तदर्थमेषाऽरम्भणीयैवेति" वर्णनं सङ्गच्छतेतरामिति । एवञ्च तन्त्रादिनाऽर्थकरणेऽपि न क्षतिरिति दिक् ।

प्र० १३१—एष प्रश्नस्तु ५८ अष्टापञ्चाशत्तमे साधूत्तरेण विनियोजित इति तथैवेहापि समाधानप्रकारो बोध्यः ।

प्र० १३२—अयञ्च प्रथम १ प्रश्नवदेव समाधेय इति ।

प्र० १३३—सम्बन्धिशब्दः सापेक्षो नित्यं सर्वस्समस्यते ।

वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते ॥ १ ॥
समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥ २ ॥

अनयोः कारिकयोरर्थस्तु नित्यं [ नियतम् ] सापेक्षः [ सम्बन्ध्यन्तरसाकाङ्क्षः ] सर्वः सम्बन्धिशब्दः [ समन्वयिशब्दः ] समस्यते [ समासं लभते ] हि [ यतः ] सा व्यपेक्षा [ आकाङ्क्षा, व्यपेक्षारूपसामर्थ्यस्य समासेऽसम्भवात् ] वाक्यवत् [ देवदत्तस्य गुरोः कुलमित्यादिवाक्य इव ] वृत्तौ [ गुरुकुलम् दासभार्येत्यादिसमासे ] न, हीयते [ त्यज्यते ] इति प्रथमकारिकार्थः ।

द्वितीयस्याः कारिकायास्तु—येषाम् [ नित्यम् आकाङ्क्षितानामपदार्थानाम् देवदत्तादीनाम् ] समुदायेन [ विशिष्टेन प्रधानपदार्थेन ] गुरुकुलादिना, सम्बन्धः [ अन्वयः ] ते, अवयवान् [ समुदायजन्यशाब्दबोधीयविशेष्यतानिरूपितविषयत्वाश्रयान् गुर्वादीन् ] संस्पृश्य [ द्वारीकृत्य अर्थात् तद्द्वारकस्वीयगुरुत्पाद्यत्वादिसम्बन्धेन, तद्वता [ अवयववता ] सह [ साकम् ] युज्यन्ते [ सम्बध्नन्त ] इत्यर्थः ।

प्र० १३४—अयम् प्रश्नः ६३ त्रिपष्टितमप्रश्ने साधु निरूपित इति तथैवावगन्तव्यः ।

प्र० १३५—ननु सर्वादिगणे द्विशब्दात् प्राक् किंशब्दस्य पाठेन "त्यदादीनामः" इत्यनुवर्त्तनात् त्यदादीनामिमोऽः स्यादित्यर्थक "इमोऽः" इति न्यासेनैव सिद्धे "किमःकः" किंशब्दे ककारोच्चारणं किमर्थम् ।

नच तथा सति "अलोऽन्त्यस्य" इति परिभाषयाऽन्त्यस्यैवादेशापत्तिर्दुर्वारेति वाच्यम् ? तादृशपरिभाषाप्रतिबन्धकीभूत "नानर्थकेऽलोऽन्त्यविधिः" इति परिभाषया प्रतिबन्धादारम्भसामर्थ्याच्च तदापत्तेर्वारणसम्भवात् । इमावित्यादौ तु "अङ्गकार्ये कृते पुनर्नाङ्गकार्यमि"ति निषेधादेव सिद्धिः । "कुतिहोः" इत्यत्र "उतिहोः" इति "क्वाति" इत्यत्र च "वाति" इति न्यासेनैवोपपत्तेरिति चेन्न ? अकज्विशिष्टस्याप्यादेशविधानार्थं ककारोच्चारणस्य साफल्यात् । अन्यथा भाष्याभिमत "प्रातिपदिकात्तद्धितोत्पत्तिः" इति सिद्धान्तेन अङ्गसंज्ञानिमित्तप्रत्ययनिरपेक्षत्वेनान्तरङ्गत्वात् पूर्वमेवाकचो विधानात् निरुक्तनव्यन्यासेनात्वेऽपि कक इत्येव स्यात् ।

राद्धान्ते तु 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति न्यायेनाकज्विशिष्टस्यापि किम्ग्रहणेन ग्रहणात् क इत्येवेष्टः । ककारोच्चारणसामर्थ्यादेव चैतन्न्यायविषये "निर्दिश्यमानपरिभाषा" न प्रवर्तत इति सिद्धान्तात् "भिन्धकि इत्यत्राकचि धित्वन्न प्राप्नोति निर्दिश्यमानपरिभाषया" इति भाष्यस्याकज्रक्षकन्धित्वन्न प्राप्नोतीत्यस्यार्थस्य सर्वैरभिमतत्वादिति दिक् ।

प्र० १३६--एष च प्रश्नः २९ एकोनत्रिंशत्प्रश्ने साधु व्याख्यात इति तथैवेहाप्यनुसन्धेयः।

प्र० १३७--ननु क्रुश आह्वाने इति धातोस्तुनि क्रोष्टुशब्दस्य तृचि क्रोष्टृशब्दस्य च सिद्धौ तृज्वद्भावविधायकं सूत्रन्निष्फलमिति चेन्न? सर्वनामस्थाने स्त्रियां च तृजन्तस्यैव, तृतीयादावच्युभयस्य, अन्यत्र तु तुन्नन्तस्यैव प्रयोग इति नियमार्थमावश्यकत्वात्।

अत एव द्वितीयाबहुवचने शसि क्रोष्टूनित्येव भवति। नचैवमुभयोः शृगालवाचकत्वेऽपि तुन्नन्तस्य सर्वनामस्थानादौ अप्राप्त एव तृज्वद्भावो विधीयत इति कथन्नियमार्थत्वं किन्तु विध्यर्थत्वमेव युक्तमिति वाच्यम्! फलतः प्रयोगनियमार्थत्वस्यैव प्राग् वर्णनात्।

निमित्तव्यपदेशतादात्म्यशास्त्रकार्यरूपविषयकत्वेन षड्भेदा अतिदेशाः। तत्र "पूर्ववत्सनः, आद्यन्तवदेकस्मिन्, सुबामन्त्रिते पराङ्गवत्स्वरे" इति त्रयं यथाक्रममाद्यत्रयस्योदाहरणम्। शास्त्रकार्यातिदेशयोस्तु "स्थानिवदादेशः" इत्यादि प्रसिद्धतरम्। रूपातिदेशस्य च प्रकृतन्तृज्वद्भावविधायकमुदाहरणं सम्भवति! प्राधान्यादन्येषामसम्भवाच्च। तथाहि-तृजन्तत्वात्मकनिमित्तत्वस्य तद्व्यवहारस्य वाऽतिदेशे आहत्य तृच्छब्दमुच्चार्य विहितकार्यस्यैवापत्तौ जसि दीर्घ एव स्यात्, स्वौजसादिषु चानङ्गुणौ न स्याताम्। नच उत्तरसूत्रद्वयेन विधानसामर्थ्यात् "अप्तृन्नि" त्यत्र क्रोष्टुग्रहणेनैव सिद्धावाद्येनापि सामर्थ्यात् कार्यमात्रप्रवृत्तिरिति वाच्यम्! तत्सामर्थ्येन रूपातिदेशस्यैव युक्तत्वात्। सहप्रयोगाभावाच्च न तादात्म्यातिदेशसम्भवः। शास्त्रकार्यातिदेशावपि न! तुन्नन्तस्याद्युदात्ततया तृज्वद्भावेनोकारस्य रेफरूपयणादेशेऽपि तस्योदात्तस्थानिकयणोऽभावेन "उदात्तयणो हल्पूर्वात्" इतिस्वरानापत्तेः। तयोरैक्यस्य स्वत एव सत्त्वाच्चार्थातिदेशोऽसम्भवी। तृज्वदिति चकारोच्चारणसामर्थ्यात् अन्तोदात्तस्वरविशिष्टमिति ऋकारस्योदात्तत्वात् "उदात्तयण" इत्यादिस्वरसिद्धिरिति संक्षेपात्।

प्र० १३८—अत्र "ङिति ह्रस्वश्च" इति सूत्रे "ङिति" इत्येको योगः। आद्ये "इयङुवङ्स्थानावस्त्री स्त्र्याख्यौ इति त्रयमनुवर्त्तते। द्वितीये तु "स्त्र्याख्यौ" इत्येतदेकदेशमात्रमनुवर्तते नतु नित्यस्त्रीलिङ्गार्थकमाख्याविशिष्टम्। अत एव इष्वशनिप्रभृतीनामुभयलिङ्गानां पटुमृदुप्रभृतीनां सर्वलिङ्गानां कथन्नदीत्वमित्या-

शङ्क्य "ह्रस्वश्चेत्यत्र नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाश्रीयते" इति कैयटोक्तं सङ्गच्छते। तन्मते "स्त्रीविषयावेव यौ यू नित्यम्" इति भाष्यानुसारेण लिङ्गान्तरविशिष्टार्थानभिधायकत्वन्नित्यस्त्रीत्वम् इति सिद्धान्तात्। पदान्तरं विनापि स्त्रियां वर्त्तमानत्वमिति वृत्तिकारादिमते ह्रस्वांशे नित्यग्रहणव्यावर्त्यालाभात् इष्वादीनां हि शब्दवाच्य एव स्त्रीत्वमिति संक्षेपतोऽनुसन्धेयम्।

प्र० १३९—अस्योत्तरं १७ सप्तदशे प्रश्ने यथावदुक्तमिति तत्र एवानुसन्धीयताम्।

प्र० १४०—ननु "गुणा अभेदकाः" इति पक्षे "पथिमथ्यृभुक्षामात्" इति सूत्रेऽनुनासिकोच्चारणेऽपि आन्तरतम्यादनुनासिकः स्यादित्याशङ्क्याह परमसूले "आ आदिति शुद्धाया एव" इति।

ये तु नेहानुनासिकप्राप्तिः अनण्त्वेन सवर्णग्रहणाभावादिति। नचानणि विध्यर्थेन तपरसूत्रेण प्राप्तिरिति वाच्यम्? भाव्यमानस्सवर्णान्न गृह्णातीति निषेधात्। किञ्च गुणानामभेदकत्वेऽपि सूत्रे शुद्धैकव्यक्तेर्निर्देशान्नातिप्रसङ्ग इति प्राहुः। तन्न? विचारसहम् अनणि विध्यर्थमिति शङ्कादलस्य, भाव्यमानः सवर्णान् इत्युत्तरदलस्य च निरालम्बनत्वात्। तत्र हि "चोः कुः" इत्यादौ दोषवारणाय "भाव्यमानोऽण् सवर्णान्न गृह्णाती"ति भाष्यकृदुक्तेः। नचेहोदित्करणसामर्थ्येनैव शक्यते तद्वारणमिति वाच्यम्? तादृशविचारस्य ज्ञानाभासैरपि विरहितत्वात्। भाष्ये "तपरस्तत्कालस्य" इति सूत्रेऽप्रत्ययग्रहणस्यानुवर्त्तितत्वाच्च। अभेदकत्वे दोषस्य दुरुद्धरत्वात् "शुद्धैकव्यक्तेः" इत्याद्यपि सङ्गतिविहीनमेव बोध्यम्।

प्र० १४१—युष्माकमित्यादावन्त्यलोपे सत्येव प्राप्तस्य सुडागमस्य निवृत्तये कृतेन "साम आकम्" इति ससुट्कनिर्देशेन "शेषे लोपः" इति सूत्रीयान्त्यलोपपक्षो ज्ञाप्यते। एवम् "भ्यसोऽभ्यम् इत्यत्र नचादेशो हलादिरस्तीति अभ्यमित्येव च्छेदोऽस्ति शेषे लोपे सिद्धं युष्मभ्यमि"तिभाष्येण टिलोपपक्षोऽपि भाष्यसम्मतः।

एवञ्च शेष इत्यावर्त्त्यं एकस्य विभक्तिविशेषणत्वेन आत्वयत्वेत्यादिमूलोक्तार्थ एव। स्थानिनोऽधिकरणत्वविवक्षया शेषस्य लोप इति द्वितीयार्थः। एवञ्चोभयोस्सम्भवो नासम्भव इति।

ननु शेषस्य लोप इत्यर्थो निष्फलो भाति। नच त्वं स्त्रीत्यादौ टाबभाव एव फलमिति वाच्यम्? सन्निपातपरिभाषयैव तद्वारणसम्भवात्। अत एव भाष्य-

कृता शेषग्रहणम् प्रत्याख्यातम् । आत्वयत्वनिमित्तेतरेत्याद्यर्थस्तु विशेषविहिताभ्यामात्वयत्वाभ्यां स्वविषये लोपस्य बाधेनैव सम्भावनीयः । अत एव यूयमित्यत्र सकारप्रश्लेषो भाष्यकृत्कृतश्शोभावारणार्थस्सङ्गच्छतेतराम् ।

एवञ्च सप्तद्वकनिर्देशप्रत्याख्यानापेक्षया शेषग्रहणप्रत्याख्यानमेव साधीयो भवतीति दिक् ।

प्र० १४२—एतस्योत्तरन्तु ८१ एकाशीतितमे वैशद्येन निरूपितमिति तत एवावगम्यताम् ।

प्र० १४३—सम्प्रसारणसंज्ञाविधायके "इग् यणस्सम्प्रसारणम्" इति सूत्रे समागताऽन्योन्याश्रयादिदोषोऽधोनिष्ठप्रकारैर्वार्यते । तथाहि अस्य सूत्रस्य शाटकं वयेत्यादौ "यदि वातव्यो न शाटको यदि शाटको न वातव्यः" इति विरोधमाशङ्क्य "मन्ये स वातव्यो यस्योतस्य शाटक इत्येषा संज्ञा भवति" इति भाष्योक्तसूत्रशाटकन्यायेन भाविन्यास्संज्ञायास्समाश्रयणात् विधिप्रदेशेषु निर्वाहसम्भवात् । तथाहि यणः स्थाने स भवति यस्य सम्प्रसारणशब्देन जातस्य सम्प्रसारणसंज्ञा भवतीत्यर्थः । तेन "दिव उत्" इत्यस्य न सम्प्रसारणत्वम् ।

नच तथाप्यन्योन्याश्रयो दोषस्तदवस्थ एवेति वाच्यम् ? सम्प्रसारणशब्दस्य सम्प्रसारणभाविते यण्स्थानिकेकत्वावच्छिन्ने च खण्डशः शक्तिस्वीकारेण सम्प्रसारणविधिस्थले सम्प्रसारणशब्दभावित्वांशस्य मोषेण दोषाभावात् । अत एव नापाचि द्युभ्यामित्यादौ दोषस्पर्शोऽपीति दिक् ।

प्र० १४४—एतत्प्रश्ने "पुंसोऽसुङि"त्यत्र सप्तम्यर्थविचारो यः पृच्छ्यते सच ७० सप्ततितमे प्रश्ने साधु निरूपित इति तत एवावगमं विधायाधस्तनप्रकारेण "न मु ने" इति सूत्रीयार्थो विचार्यताम् । तथाहि "ने" इति विषयार्था सप्तमी तथाच नाभावे कर्त्तव्ये इत्यर्थः, अन्यथा घेः परत्वाभावान्नात्वन्नैव स्यात् । आवृत्त्या नेपदस्य चैकत्र निमित्तत्वं सप्तम्यर्थः, एवञ्च कृतेऽपि नाभावे मुत्वन्नासिद्धं किन्तु सिद्धमेवेति बोध्यते । अत एव दीर्घम्प्रति मुत्वस्यासिद्धत्वात् कृते नाभावे "सुपि च" इति न दीर्घापत्तिः । अत्र सन्निपातपरिभाषयाऽपि दीर्घशक्यवारणः । नच अमुना इति सिद्ध्यर्थम् "अमुना" इत्येव "अधुना" वत् न्यासः कार्यः किमेतादृशगौरवेणेति वाच्यम् ! राम इत्यादौ "ससजुषो रुः" इति रुत्वमित्संज्ञालोपदृष्ट्याऽसिद्धमिति कथं स्याद् विसर्गादिरित्येतदर्थम् क्वचित् त्रिपाद्या असिद्धत्व-

न्नेति ज्ञापनाय सूत्रे नादिचारितार्थ्यं तथैव स्थापनीयत्वात्। नचानुनासिकनि र्देशसामर्थ्यादित्संज्ञालोपौ प्रति नासिद्धत्वमिति वाच्यम् ? तन्मूलमित्यादौ "हशि च" इत्यस्य वारणाय "अतो रोः" इत्यत्रानुनासिकनिर्देशेन तत्रैव चरितार्थत्वात्। इत्यादि स्पष्टितम्मनोरमायामिति दिक्।

प्र० १४५—ननु दधिसेचावित्यत्र प्राप्तमपि षत्वं कुतो न भवतीति चेन्न; "सात्पदाद्योः" इति सूत्रेण तन्निषेधात्। नच तत्र सुत्रे पदस्यादिः पदादिरिति समासो भवति प्रकृते च सुबुत्पत्तेः प्रागेव समासात् पदत्वाभावात् कथन्निषेध इति वाच्यम् ? अत एव पञ्चमीसमासस्य स्वीकारात्। नचैवं रामेष्वित्यादावव्याप्तिः ? सातिग्रहणात् "स्वादिषु" इति या पदसंज्ञा तामाश्रय न निषेधप्रवृत्तिरिति ज्ञापनात्। व्यतिसे इत्यादौ षत्वापत्तेश्च "प्रत्ययविषये नायन्न्यायः" इति ज्ञापनप्रकारो न युक्तः। नच पदस्यादिरिति षष्ठीसमासे से इत्यस्य तिङन्ततदादित्वाभावेन कथन्निषेधः प्रवर्त्तत इति वाच्यम् ? एकदेशविकृतन्यायेन प्रकृतिप्रत्ययगतपदत्वमादाय प्रत्ययलक्षणद्वाराऽदोषादिति।

शब्दरत्नकारास्तु सुवाचा सुवाचावित्यादिसिद्धये दध्नः सेचाविति षष्ठीसमासेऽपि षत्वनिषेधाय पञ्चमीसमासस्वीकारस्यावश्यकत्वेन स्वादिषु पदत्वविधायकयोगविभागस्वीकारेण वार्त्तिकमिदम्प्रत्याख्यातमिति। एवञ्च बहुसेचावित्यत्र षत्वनिषेधार्थं "बहुचपूर्वस्य षत्वन्ने"ति वचनमवश्यङ्कार्यम्। व्यतिसे इत्यत्रैकवचनन्तु जयमङ्गलारीत्या समाधेयमिति दिक्।

प्र० १ ६—प्रश्नश्चायं ४८अष्टाचत्वारिंशत्तमे साधूक्तोत्तर इति तथैव व्याख्येयः

प्र० १४७—एतत्प्रश्नस्योत्तरम् २२ द्वाविंशे प्रश्ने साधु दत्तमिति तथैवेहानुसन्धीयताम्।

प्र० १४८—एतदुत्तरन्तु ९९ एकोनषण्णवतिप्रश्ने साध्वीरितमिति ततोऽवगम्यताम्।

प्र० १४९—"आच्छीनद्योः" इति सूत्रस्वरसात् वर्णयोरेव नदीसंज्ञा "यू स्त्र्याख्यौ" इत्यनेन सम्पद्यते। नच वर्णस्य स्त्र्याख्यत्वमप्रसिद्धम् ? ङीबादिषु प्रत्ययेषु स्वतः सिद्धत्वात् श्रीहीत्यादौ स्त्रीवाचकवर्णसमुदाये च घटकतया प्रवेशात्। शक्तिपर्याप्त्यधिकरणत्वविवक्षणे च प्रमाणाभावः। अत एव नद्यन्तत्वव्यवहृतिर्न विरुद्धा। तदन्तसंज्ञापक्षे "शीनद्योः" इत्यादौ नदीशब्दस्य तदवयवे लक्षणायां लाघवाभावात्। एवं घिसंज्ञाविधायकेऽपि इउवर्णौ तदन्तं वा घिसंज्ञक

मिति पक्षद्वयं बोध्यते। वर्णसंज्ञापक्षे असखि इत्यस्य सखिभिन्नस्यावयव इत्यर्थो नतु सखिशब्दावयवं वर्जयित्वेति। तेनातिसखिनेत्यादि साध्यमेव। स्त्रीत्वविशिष्टार्थमात्रबोधकस्यैव संज्ञेत्यर्थेन च "प्रथमलिङ्गग्रहणञ्च" इति वार्त्तिकसाफल्यम्, जहत्स्वार्थावृत्तित्वाभिमानेन वा तदुक्तेः।

भाष्यकारास्तु अजहत्स्वार्थायामवयवस्य नित्यस्त्रीत्वविशिष्टार्थबोधजनकत्वेन तस्य संज्ञायां कुमार्य ब्राह्मणायेत्यादौ नद्यन्तत्वात् कार्यसिद्धिमभिधाय प्रत्याख्यानमस्य कुर्वते। तन्मात्रबोधकत्वनिवेशे च प्रमाणवैकल्यम्। क्यजाद्यन्ते तु न दोषः? अवयवशब्देन वृत्तिप्रकृतिभूतशब्दग्रहणात्।

नित्यस्त्रीत्वञ्च प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम्। वैशिष्ट्यञ्च स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारत्वाप्रयोजकत्वैतत्त्रितयसम्बन्धेन। शक्तिवै० च स्वपर्याप्त्यधिकरणत्वस्वज्ञानाधीनोपस्थितिप्रयोज्यबोधजनकत्वप्रकारकतात्पर्यविशेष्यताविशिष्टतात्पर्यविषयतापर्याप्त्यधिकरणत्वोभयसम्बन्धेन। तत्रापि वै० च स्वावच्छेदकतद्व्यक्तित्वव्यापकानुपूर्व्यव्याप्यधर्मावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेनेति।

प्र० १६०—एष प्रश्नस्तु चतुरशीतितमे ८४ प्रश्ने साधूत्तरसम्पदा विभूषित एवानुसन्धेयः।

प्र० १६१—ङीप्प्रत्ययविधायकस्य "पुंयोगादाख्यायाम्" इति सूत्रस्य पुंयोगादिति हेतौ पञ्चमी आख्यायामिति पञ्चम्यर्थे सप्तमी, बोधकत्वमाख्यापदार्थः। पुंयोगाद्धेतोः प्रवृत्तिनिमित्तारोपेण स्त्रियां वर्त्तमानात् पुंबोधकाच्छब्दान्ङीष्प्रत्ययो भवतीत्यर्थः। अत्र दम्पतिभाव एव योगशब्दार्थ इति केचित्।

वस्तुतस्तु तादृशसङ्कोचे मानाभावात् जन्यजनकभावसम्बन्धोऽपि गृह्यते। अत एव "कौशल्ययासावि सुखेन रामः प्राक् केकयीतो भरतस्ततोऽभूत्" इति भट्टिप्रयोगोऽप्युपपद्यते। अन्यथा "जनपदशब्दात्" इत्यपत्यप्रत्यये कैकेयीत्यापद्येत। नच 'अतश्च" इति तल्लुकि न दोषः? "न प्राच्यभर्गादिभ्यः" इति तन्निषेधात्। अत एव "कैकेयि कामाः फलितास्तवेति" कलिदासोक्तिरपि सङ्गतेति दिक्।

प्र० १६२—एकाधिकपञ्चाशत ५१ प्रश्नवच्चायमुत्तरणीयः।

प्र० १६३—अयन्तु ६९ एकोनसप्ततिप्रश्नोत्तरेणैव गतार्थ इति बोध्यम्।

प्र० १९४—नच बहुश्रेयसी कुलमित्यत्र क्लीबे "ह्रस्वो नपुंसके प्रातिपदि-स्य" इति ह्रस्वविधायकेन ह्रस्वस्स्यादिति वाच्यम् ? "ईयसो बहुव्रीहेर्न" इ-परमप्राचीनसिद्धान्तपथेन ह्रस्वनिषेधात् । नचोपसर्जनह्रस्वस्यैव तेन निषेधोऽभि-मत इति निरुक्तापत्तिस्तदवस्थेति वाच्यम् ? तथा सतीष्टापत्तेरिति मनोरमाकाराः

शब्दरत्नकारास्तु—"ईयसश्च" इति सूत्रे भाष्ये ईयसः परस्योपर्जनस्त्रीप्रत्-यस्य दीर्घत्वं वक्तव्यम् बहुश्रेयसी नैतदस्ति बहुव्रीहौ पुंवदिति सिद्धम्" इत्यु-म् । तत्रेयसः परस्य बहुव्रीहौ विद्यमानस्य पुंवत् कोऽर्थः पुंविषयस्येकार-यथा न ह्रस्वस्तथाऽस्यापीति तदर्थः । नच नेत्येव सिद्धे पुंवचनं व्यर्थमिति वा-च्यम् ? वार्त्तिकस्य लघुत्वादिविचारस्य बहुशो भाष्यानभिमतत्वात् । प्रत्याख्या-नकल्पे हि "प्रत्यासत्ति" न्यायेन उपसर्जनह्रस्वत्वस्यापवादत्वात् । प्रत्याख्यान-सङ्गत्यापत्तिवारणाय च न सामान्यतो ह्रस्वत्वावच्छिन्नयावदपवादत्वम् इति शा-

प्र० १९५—प्रश्नश्चायम् ५८ अष्टापञ्चाशत्तमे साधु समुत्तरित इति तथैवा-नुसन्धाय लेख्यः ।

प्र० १९६—एतत्प्रश्नस्योत्तरन्तु १६ षोडशप्रश्नोत्तराभिन्नमिति तदुत्तरमु-त्तरणीयम् ।

प्र० १९७—अयञ्च प्रश्नः १२४ चतुर्विंशत्यधिकशततमे प्रश्ने युक्तोत्तर-बोधित इहावगन्तव्यः ।

प्र० १९८—एतस्योत्तरन्तु २१ एकविंशे प्रश्ने दत्तमिति तथैवात्रापि बोध्यम्

प्र० १९९—अत्र "हल्ङ्याब्भ्य" इति इति सूत्रे प्रथमहल्ग्रहणस्य फल-३ तृतीयप्रश्ने यथावद् विचारितमिति ततोऽवधाय "अनङ् सौ" इत्यस्य स्था-"सोर्डा" इति न्यासः कुतो नेति चेदत्रोच्यते—तथासति उशनेत्यादावनङोऽभा-वात् सिद्धिर्न भवेत् । नच तत्रापि "ऋदुशन" इत्यत्र डादेशेऽनुवर्त्तमाने नोक्तदो-इति वाच्यम् ? लाघवाभावेन डित्वसामर्थ्यात् टिलोपादिकल्पने गौरवाच्च तथाचोशनसोऽनङ् तद्वैकल्पिकत्वञ्चेति द्वयमपि चिन्त्यप्रयोजनमेवेति भाष्या-वक्तारः ।

वस्तुतस्तु "सोर्डा" इति न्यासे विशिष्टन्दूषणम्मदीयपितृचरणैस्स्वरचितकौ-मुदीकल्पलतिकायान्दत्तमिति विशेषतो जिज्ञासुभिस्तत एवानुसन्धेयमिति दिक्

इत्यजन्तावधिकस्त्रीप्रत्ययान्तभागीयप्रश्नानामुत्तराणि ।

---

# अथ तृतीयखण्डे
# [ कारकाव्ययीभावयोः प्रश्नानामुत्तराणि ]

प्र० १—अत्र कारकप्रकरणीये "गतिबुद्धिः" इति सूत्रे प्रत्यवसानम्भक्षणम् अर्थशब्दस्य च प्रत्येकं योगः "द्वन्द्वान्ते श्रूयमाणम्पदम्प्रत्येकमभिसम्बध्यते" इति न्यायात्। कर्मशब्दश्चेह कर्मव्यतिहारवत् क्रियापरः किन्तु शब्दः कर्मयेषामित्यर्थः। एवञ्च प्रयोजकव्यापारेऽन्यानधीनत्वरूपार्थप्राधान्यस्य शब्दप्राधान्यस्य च सत्वेनान्तरङ्गादपि कर्त्तृत्वात् तदनुरोधिकर्मत्वस्य बलीयस्त्वेन "कर्त्तुरीप्सिततमङ्कर्म" इत्येव सिद्धे सूत्रमिदं "गति बुद्धि" इति व्यर्थीभूय णिजर्थेनाप्यमानस्य यदि भवति कर्मसंज्ञा तर्हि गत्याद्यर्थानामेव कर्त्तुरिति। तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये प्रकृत्यर्थम्प्रति कर्त्तृत्वस्यैव निरपवादत्वेनावस्थानात् तृतीयासिद्धिरिति भाष्यानुगो मनोरमाकारः।

अत एव आकडारीयम् प्रधानंकार्यं सर्वतो बलवदिति कैयटमपि संगमयन्ति। अत एव च,

> गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मताङ्गतः।
> नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते॥

इति कारिकापि संगच्छते। तत्र कर्त्तुः स्वधर्मेण तृतीययेत्यर्थः। प्रयोज्ये कर्त्तरि च तृतीयैव भवतीति हार्दम्।

किञ्च कर्तृग्रहणं धात्वर्थप्रधानीभूतव्यापाराश्रयत्वरूपस्वतन्त्रोपलक्षणन्नतु तत्संज्ञकपरम्, उद्देश्यत्वलक्षणार्थप्राधान्यस्य प्रयोज्यव्यापारनिष्ठस्य पुरस्कारे तु विधायकत्वमेवोचितमिति। आकडारसूत्रीयभाष्यकैयटविरोधात् समुपेक्ष्य एवैष प्रकार इति मनोरमाकृतस्तुशब्देन सूचयन्ति। एतद्भाष्यन्तु माधवशास्त्रिभण्डारिरचितप्रभाख्यटिप्पण्यां विशदं निरूपितमिति कदाचित् पृच्छयते चेत्ततोऽनुसन्धीयताम्।

प्र० २—तावेवार्थौ यस्येति तदर्थस्तस्य तदर्थस्य, अत्र तच्छब्देन पूर्वसूत्रवृत्ती व्यवहृपणौ परामृश्येते तौ च पूर्वसूत्रे द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थे गृहीताविती हापि द्यूते इति कर्मणीत्याद्यर्थः। उत्तरसूत्रद्वयारम्भसामर्थ्याच्च नेह "शेषे" इत्यस्य सम्बन्ध इति मनोरमाकाराः।

शब्दरत्नकारास्तु, नन्वत्र शेष इत्यस्य सम्बन्धेऽपि उत्तरसूत्रे "विभाषोपसर्गे" इत्यत्र सम्बन्धे "दिवस्तदर्थस्य" इत्यनेनैव तत्फलस्य सिद्धत्वेन तद्वैयर्थ्यापत्तिः। नच तथा सति "विभाषोपसर्गे" इत्यत्र शेषसम्बन्धे ऽपि "षष्ठी शेषे" इति प्रवृत्त्या पक्षे समाससिद्धयेऽपि सूत्रञ्चरितार्थमिति वाच्यम्! "नोपसर्ग" इति न्यासेनैव सिद्धे "द्वितीया ब्राह्मणे" इति सूत्रवैयर्थ्यापत्तेः। नच तदनुपसर्गे द्वितीयार्थञ्च- रितार्थमिति वाच्यम् ? कर्मत्वे विवक्षिते "कर्मणि द्वितीया" इत्यनेनैव सिद्धेः। न च "द्वितीया ब्राह्मणे" इत्यत्र शेषसम्बन्धे कर्मत्वेऽविवक्षिते सूत्रञ्चरितार्थमिति वाच्यम्! विच्छिन्नत्वेनानुवृत्तेरयुक्तत्वाद् गाम्प्रतिदीव्यन्ति इत्यत्र कर्मत्वस्यैव प्रतीतेश्च, एवमेव भाष्यसम्मतेश्च।

एवञ्च भाष्ये तिङन्तोदाहरणदानेनोत्तरसूत्रद्वयवैयर्थ्यापत्त्या वृत्तिकाशिकादिग्रन्थसम्मतेश्च नात्र शेषसम्बन्ध इति दिक्।

प्र० ३—कर्मसंज्ञाविधायकम् "अकथितञ्च" इति सूत्रम्। तत्र केनाकथितमिति आकाङ्क्षोपशामकत्वेन "अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्। कारके इत्यधिकारात् प्रथमार्थे सौत्री सप्तमीति भाष्यसिद्धान्तात्। नच त्यजनोपसर्जनं त्याजनं दुहेरर्थः गौः पयस्त्यजति गवा पयस्त्याजयते इति प्रतीतेर्व्यापारद्वयार्थत्वेन "कर्त्तुः" इति "तथायुक्तम्" इति सूत्राभ्यामेव तत्र२ कर्मत्वे सिद्धे सूत्रमि व्यर्थमिति वाच्यम्! कर्मणश्शेषत्वविवक्षायां षष्ठी प्राप्नोति तां बाधितुमस्य चारितार्थ्यात्।

एवञ्चेह षष्ठीवत् सम्बन्धमात्रन्द्वितीयार्थः। अपादानत्वमात्रविवक्षायान्तु पञ्चम्येव। गोः क्षीरविशेषणत्वे तु षष्ठी, तेन गोः पयो दोग्धीत्यपि प्रयोगस्साधुरेवेत्यादि निरुक्तम्मनोरमाकृता।

शब्दरत्नकृता तु यदा पयोनिष्ठविभागानुकूलव्यापार एव धात्वर्थस्तदाऽपादानत्वाविवक्षायाम् अन्येनासिद्धेः कर्मत्वार्थमिदमावश्यकमेव। एवमन्येष्वपि षष्ठ्यपवादत्वमात्रेण सम्बन्धार्थकताऽपि नोचिता! तथासति कर्त्रादेरपि षष्ठ्यपवादत्वेन तृतीयादेरपि सम्बन्धार्थकत्वापत्तेः। तस्मादत्रापि क्रियाजनकतासमानाधिकरणकर्मत्वशक्तिमत्त्वेनैव बोधौचित्यमिति। एवमेव यथाप्रयोगं बहूनान्धातूनां व्यापारद्वयार्थकत्वेन द्विकर्मकत्वं सिद्धम् भाष्यादिनीतम्। तत्र ये व्यापारद्वयार्थत्वेन कर्मकास्तेषाम्प्रधानकर्मणि लकारादयः।

अत एव "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥" इति भाष्यसिद्धान्तोऽपि संगच्छते ।

प्रधानकर्मत्वञ्च कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानधात्वर्थव्यापारमात्रविशेषणफलाश्रयत्वम् । ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्राह्यत्वादित्यादि प्रतिपादितमिति दिक् ।

प्र० ४––प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥ १ ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते ॥ २ ॥

कारकप्रकरणे द्वितीयादौ "अनभिहिते" इत्यधिकारः प्रचलति । अतश्च अभिहिते "उक्तार्थानामप्रयोगः" इति न्यायेन द्वितीयादेरप्राप्त्या प्रातिपदिकार्थमात्रे प्रथमाविभक्तिस्सिद्ध्यतीति ।

नचैवम् पक्वमोदनम्भुंक्ते इत्यत्रापि द्वितीया न स्यात् इति वाच्यम् ? अत्र पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती, इति प्रधानक्रियानिरूपितामनभिहितां शक्तिमादाय द्वितीयोत्पत्तेः । इदमेव फलयितुम्प्रमाणयितुञ्चोक्तकारिकाद्वयावतारः ।

एवञ्च यत्र द्रव्यस्य प्रधानेतरयोः क्रिययोर्द्वयोरुपस्थितिः तत्र गुणाश्रया [गुणनिरूपिता ] शक्तिः प्रधानम् [प्रधानक्रियानिरूपितां शक्तिम्] अनुरुध्यते । अनुरोधमेव स्पष्टयति प्रधानविषयेति । गुणेऽनुक्तापि प्रधानविषया शक्तिः प्रत्ययेन अभिधीयते । तद्वत् [ उक्तवत् ] प्रतीयते । तुल्यन्यायाद् गुणनिरूपिता उक्तापि प्रधाननिरूपितानुक्तशक्तिवत् प्रकाशत इति । अत एव प्रासाद आस्त इत्यादौ सदिनिरूपिताधिकरणत्वस्योक्तत्वेऽपि आसिनिरूपितस्यानभिधानेनानभिहितत्वात् सप्तमी सिध्यति । स्पष्टितञ्चैवम् "स्वादुमि णमुल्" सूत्रे भाष्ये । अत एव पक्त्वौदनो भुज्यते इत्यत्र पचेरप्राधान्यात् भुजिप्रत्ययेनाभिहिते प्रथमैव भवति ।

वस्तुतस्तु पक्त्वा भुज्यत इत्यादौ कर्मणः पचि भुजिभ्यां न युगपच्छाब्दोऽन्वयः किन्त्वन्यतरेण शाब्दोऽपरेणार्थः । तत्र प्रथमाद्वितीये व्यवस्थिते एव । इति विवक्षाभेदेन पूजयितुं शक्यते हरिर्हरिं वेत्युभयं साध्विति प्राञ्चः ।

नव्यास्तु उभयनिरूपितशक्तेरनभिधाने गुणक्रियानिरूपितशक्तेरप्यभिधायिनी विभक्तिर्भवतीति । यथा ग्रामाय गन्तुमिच्छति ग्राममिति वा । इष्यते ग्रामो

गन्तुमित्यादौ प्रधानेऽपि क्रियानिरूपितशक्तेरभिधाने गुणनिरूपिताया अव्यभिधानान्न कदापि चतुर्थीद्वितीये । एवञ्च कैयटादिप्रामाण्यात् आवृत्त्योभयत्र शाब्दान्वयोऽङ्गीकार्य एव । तथा चैतद्विरोधादोदनम्पक्त्वेत्यपास्तमेवेति नव्यमतमेव साधीयोऽन्यथा भाष्याद्यसंगत्यापत्तेः ।

प्र० ९—कर्मसंज्ञाविधायके "कर्त्तुरीप्सिततमङ्कर्म"इत्यत्र वर्त्तमानार्थकक्तेन योगे "क्तस्य च वर्त्तमाने" इति षष्ठी । एवञ्च कर्त्राऽऽप्तुमिष्यमाणङ्कर्मेत्यर्थः । कर्त्ता च धातूपात्तव्यापाराश्रयः । केनाप्तुमिच्छतीत्याकाङ्क्षायां कर्तृपदार्थविशेषणीभूतेन "उपस्थितम्परित्यज्यानुपस्थितकल्पने मानाभाव" न्यायेन व्यापारेणेत्यर्थाल्लभ्यते।

अत्र सूत्रे "कर्तुराप्ततमं कर्म" इतिन्यासे काशीं गच्छन् पथि मृतः इत्यत्राधिकरणत्वम्प्रबाध्य पथः कर्मत्वोपरागेण द्वितीयापत्तिः । नच काशीङ्गच्छति न प्रयागमिति प्रयोगे प्रयागस्योत्तरदेशसंयोगानुकूलव्यापाराश्रयत्वाभावेन कथङ्कर्मत्वमिति वाच्यम् ? गन्धातोस्संयोगानुकूलव्यापारे शक्तेस्सत्त्वेन संयोगेनारोपितसंयोगवास्तविकसंयोगयोर्ग्रहणेन "आरोपितत्वन्नञ्द्योत्यम्" इतिन्यायेन प्रकृते च नञस्सत्त्वेन तत्सिद्धेः । संयोगाभावरूपफलाश्रयत्वाच्च प्रयागस्य कर्मत्वोपपादनात् । अत्र च सूत्रे कटं करिष्यति कटं कृतवान् इत्यादौ कर्मत्वसिद्धये क्तप्रत्ययोपात्तवर्त्तमानत्वमविवक्षितमेव ।

नचैवम् "क्तस्य च वर्त्तमाने" इतिषष्ठी न स्यादिति वाच्यम् ? "गमेरिट्" इत्यत्र परस्मैपदग्रहणस्य तङानयोरभावपरत्ववत्तत्र वर्तमानपदस्य भूतभविष्यत्कालाबोधजनकपरत्वेन "वर्तमाने"इत्यधिकृत्य विहितस्य क्तस्येत्यर्थेनादोषात् । वर्तमानत्वन्नैव विवक्षितमित्यस्य वर्तमानत्वावच्छिन्नविषयताकबोधनाय न विवक्षितमित्यर्थेनादोषाच्चेति दिक् ।

प्र० ६—वृत्तिकारैर्हि प्रागुभिः प्रातिपदिकार्थस्सत्ता, प्रवृत्तिनिमित्तमिति तात्पर्यम् । तद् व्याचक्षाणाश्च योऽर्थस्सन्नेव केवलं भासते न जात्यादिरूपो न च लिङ्गसंख्याकारकयोगी स विवक्षित इति । यथाऽव्ययार्थो हि केवलमस्तीति वक्तुं शक्यते न पुनरीदृश इतीति तत्सर्वमयुक्तम् । तथाहि—उच्चैर्नीचैरित्यादिशब्दानामव्ययानां सन्नित्याकारकप्रतीतिजनकत्वस्य कुत्रापि तन्त्रेऽस्वीकृतेः । असत्त्वार्थकेषु अस्त्यादिसामानाधिकरण्याभावस्य सुलभत्वेन प्रकृते अस्तिसामानाधिकरण्येनापि निर्वाहो दुरुपपादः । लिङ्गसंख्याकारकेति स्वोक्तिविरोधाच्च ।

नचैवमपि पदान्तरोपस्थापितस्य उच्चैर्गृहमस्तीति सत्वमस्तिसामानाधिकरण्यस्येति वाच्यम् ? तस्य अव्यावर्त्तकत्वात् । तत्सत्वे लिङ्गसंख्यादेरपि सम्भवेन "न पुनरीदृशस्तादृश" इति स्वोक्तवाक्यशेषविरोधस्य दुष्परिहरत्वापत्तेश्च ।

एवमेव कृष्णः श्रीरित्यादावव्याप्तिरपि स्यात् । मात्रशब्देनाधिकव्यवच्छेदाच्च न लिङ्गग्रहणात्सत्वसिद्धिरिति तेषाम्मतमयुक्तमिति ।

प्र० ७—ननु प्रासाद आस्ते इत्यत्र प्रथमाविभक्तिःकुतो नेत्याशंक्य "तिङ्समानाधिकरणे प्रथमा" इत्युक्तमुत्तरम्भाष्ये । अत एव च "इदमपि सूत्रं क्रियायोग एव प्रवर्त्तते" इति ब्रवते शाब्दज्ञाः । तस्य च यदि क्रियानिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकात् प्रथमेत्यर्थस्तदा राहोश्शिर इत्यत्र राहुपदादपि सा दुर्वारैव स्यात् । यदि च क्रियानिष्ठविशेष्यतानिरूपितसाक्षात्प्रकारताप्रयोजकात् प्रथमेत्यर्थस्तदा घटोऽस्तीत्यादौ सत्तानिष्ठविशेष्यतानिरूपितसाक्षात्प्रकारताप्रयोजकत्वस्य तिवर्थ एव सत्वेन तदनापत्तिरितिचेत् ? कारकाधिकारीयविभक्तिमात्रातिरिक्तशेषे षष्ठात्यादिविहितविभक्त्यतिरिक्तविभक्तौ चिकीर्षितायां क्रियानिष्ठविशेष्यतानिरूपितसाक्षात् परम्परया वा प्रकारताप्रयोजकात् प्रथमेति वर्णनेन दोषाभावात् ।

नचैवम् उच्चैरादिभ्योऽधिकरणशक्तिप्रधानेभ्यः कथम्प्रथमा, तेषामस्तिसामानाधिकरण्यदौर्लभ्यादिति वाच्यम् ? "अभितस्सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः" इति भाष्यात्तिङ्सामानाधिकरण्योपपादनात् । अधिकरणशक्तिप्रधानकानामपि अभेदान्वयबोधप्रयोजकपदसमभिव्याहारे शक्तिमत्प्रधानत्वेन सामानाधिकरण्यसौलभ्यादिति दिक् ।

प्र० ८—ननु बहुपटुरित्यादौ बहुच्प्रत्ययेनोक्तार्थत्वाद् यथा कल्पबादिप्रत्यया न भवन्ति "उक्तार्थानामप्रयोग"न्यायात् तथैवेहापि क्रियते कट इत्यादावपि तिङादिभिरुक्तत्वात् द्वितीया नापद्यते । एवमेव कटं करोतीत्यादौलब्धावकाशा द्वितीया कृतःकट इत्यादौ निरवकाशत्वेनापवादभूतया प्रथमया बाधिष्यत एवेति । नच वृक्ष इत्यादौ सावकाशा सेति वाच्यम् ? तत्रापि प्रतीयमानामस्तिक्रियाम्प्रति कर्तृत्वेन तृतीयाप्रसङ्गात् "तिङ्समानाधिकरणे" इति भाष्यसिद्धान्तात् । नच विशेषणान्तरनिवृत्त्यभिप्रायके अस्तिक्रियायाअनावश्यकत्वेन नीलमेतन्नतु रक्तमित्यादौ प्रथमा सावकाशेति वाच्यम् ? तथापि विप्रतिषेधादेव प्रथमासिद्धेस्तु-

पपादत्वात् । इत्यनभिहिताधिकारवैयर्थ्यमिति चेदत्रोच्यते—"द्व्येकयोः, कर्मणि, स्वौजसमौट्" इत्यादेरेकवाक्यतयाऽन्वये कर्मणीति सप्तम्या "द्व्येकयोः" इतिसूत्रोपात्तैकत्वाद्यपेक्षत्वात् कर्मणि यदेकत्वन्तत्रामिति हि सा विभक्त्यर्थ इति पक्षे सूत्राधिकारस्यावश्यकत्वात् ।

सत्यधिकारसूत्रे तु अनभिहिते कर्मणि यदेकत्वमित्यर्थे क्तेन कर्मोक्तौ कृतःकट इत्यादौ न दोषः गुणानाञ्च परार्थत्वादिति न्यायस्तु साकाङ्क्षातिरिक्तस्थलीय एवेति नेह तत्प्रवृत्तिः ।

एवञ्चाप्रधानकर्मादिविशेषणार्थं सूत्रावश्यकता । उक्तार्थानामिति न्यायस्तु प्रधानार्थविषय एवेति । कर्त्तव्यः कटइत्यादौ प्रथमातोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात् परत्वात् प्रथमेति तु युक्तिशून्यमेव ।

वस्तुतस्तु उक्तार्थन्यायाश्रयणेन सूत्रमिदम् "अनभिहिते" इति प्रत्याख्यातमाकर इति दिक् ।

प्र० ९–ननु "प्रातिपदिकार्थ" सूत्रे "एकन्द्विकन्त्रिकञ्चाथ चतुष्कम्पञ्चकन्तथा । नामार्था इति सर्वेऽमी पक्षाश्शास्त्रे निरूपिताः ॥" इति रीत्या त्रिकादिपक्षे लिङ्गादिग्रहणम्व्यर्थमेवेति चेन्न? नियतोपस्थितिकःप्रातिपदिकार्थः इति सिद्धान्तेनाविरोधात् । नियता उपस्थितिर्यस्येति विग्रहः, व्यापकत्वविशिष्टोपस्थितिनिरूपितविषयताश्रयस्समासार्थः । यद्विषयकोपस्थितिर्व्यापकत्वविशिष्टेति विग्रहार्थः । यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिस्स प्रातिपदिकार्थ इति केचित् । नियच्छतेर्व्यापकत्वमर्थः" इत्थम्भूतलक्षणतृतीयार्थो वैशिष्ट्यं स्वरूपेण, सप्तम्यन्तयत्पदार्थस्योच्चारिततत्पदार्थेऽभेदेन प्रातिपदिकपदार्थे, तस्य सप्तम्यर्थनिरूपितत्वेन व्यापकत्वपदार्थे, तस्य च स्वरूपेणोपस्थितौ, यत्पदार्थस्य वृत्तित्वेन षष्ठ्यर्थविषयत्वे, तस्य निरूपितत्वसम्बन्धेनोपस्थितावन्वयः ।

एवञ्च यदभिन्नोच्चारिताभिन्नप्रातिपदिकनिरूपितव्यापकत्वविशिष्टा यन्निष्ठविषयतानिरूपकोपस्थितिस्स प्रातिपदिकार्थः । व्यापकत्वञ्च स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । व्याप्यत्वञ्च स्वाभावाधिकरणनिरूपितवृत्तित्वाभाववत्त्वम् । क्तार्थं आश्रयत्वन्तत्र स्वरूपेण विषयताया अन्वयः, एवञ्च यदभिन्नोच्चारिताभिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिनिरूपितविषयताश्रयोऽर्थः । तत्त्वञ्च प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वम् वै०

च स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिरूपितानुयोगितानिरूपितशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यत्वसम्बन्धाभ्यामिति ।

परन्तु अपदार्थसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतारूपम्प्रवृत्तिनिमित्तन्तदाश्रयश्च प्रातिपदिकार्थः । तथाच लिङ्गग्रहणञ्चरितार्थम्' तटादिशब्दानामपि लिङ्गं वाच्यमेव । तद्द्योतकास्तु विसर्गादयः । प्रातिपदिकार्थ इत्यस्यालिङ्गाः लिङ्गप्रवृत्तिनिमित्तकाश्चाव्ययपुमादय उदाहरणानि । अन्ये लिङ्गाधिक्यस्य । एवञ्च परिमाणग्रहोऽपि सफलः ।

वस्तुतस्तु "तिङ्समानाधिकरणे" इति भाष्यमते न द्रोणो व्रीहिरुदाहरणं किन्तु द्रोणः खारी आढकमित्यादि ।

मनोरमाकारास्तु "अर्थे प्रथमा" इति न्यासः, कस्यार्थे इत्याकाङ्क्षानिवृत्तिस्तु यस्माद् विधीयन्ते स्वादय इत्येवं स्यात् । एको द्वौ इत्यादि तु "न केवला प्रकृतिः" इति भाष्यसिद्धान्तेन सिद्धम् । अनन्वितार्थत्वाच्च नान्या विभक्तिरुत्पत्स्यत इति न्यास एष भाष्याभिमत इति वदन्ति । अनर्थकनिपातेभ्यः प्रथमोपपत्तये मात्रग्रहणम् । सति चास्मिन् कर्मादियोग्यार्थकप्रातिपदिकाच्चत्तद्रहितस्वार्थं एवेति न दोष इति । अर्थनियमपक्षे तु मात्रग्रहणं "सम्बोधने च" इत्यत्र भाष्ये प्रत्याख्यातमितिक् ।

प्र० १०—ननु भोक्ता भोजक इत्यादाविव "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोश्च प्रत्ययार्थः प्रधानम्" इति न्यायेन तिङन्तेऽपि देवदत्ता भुंक्ते इत्यादावपि प्रथमान्तार्थमुख्यविशेष्यकः तार्किकाभिमतसिद्धान्तेन यत्किञ्चिद्भक्ष्यकर्मकगलबिलाधस्संयोगानुकूलव्यापारानुकूलकृतिमान् देवदत्त इति बोधो योग्य इति चेन्न ? "क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति यास्काचार्यसिद्धान्तानुसारेण क्रियामुख्यविशेष्यकबोधस्यैवाहंगीयत्वात् । धातूपस्थापिता क्रिया तिङर्थम्प्रति विशेष्या नतु कृदर्थम्प्रतीव विशेषणमिति हि तदर्थः । अत एव पाचको व्रजतीतिवत् पचति व्रजतीति नैकवाक्यम् । पश्य मृगो धावतीति वाक्यात् मृगकर्तृकगमनानुकूलव्यापारकर्मकत्ववत्कर्तृकदर्शनानुकूलव्यापार इति बोधः ।

अत्र च शाब्दिकमते एकवाक्यत्वं भाष्याभिप्रेतं सिद्ध्यति । तार्किकादिमते च बोधद्वयसत्त्वेन तदसम्भवापत्तेः । अतएव "सुबन्तं हि यथाऽनेकतिङन्तस्य विशेषणम्।

तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥" इति कारिकाऽपि संगच्छते। मृगस्य कर्मतयाऽन्वयेन च न निर्वाहः ? द्वितीयापत्तेरप्रथमासामानाधिकरण्ये शत्राद्यापत्तेश्च । अध्याहारे गौरवाच्च न वाक्यभेदो मुन्यादिवचनविरोधाच्च । क्रियाप्रधानमित्यत्र क्रियायाः प्राधान्यमाख्यातघटकप्रत्ययार्थापेक्षयैव बोध्यत इति न इश्यादिकम्प्रति धावनादेर्विशेषणत्वेऽपि क्षतिरिति दिक् ।

प्र० ११—कर्मसंज्ञाविधायके "अकथितञ्च" इति सूत्रे "अर्थनिबन्धनेयं संज्ञा" इत्युक्तं कौमुद्याम् । अर्थो निबन्धनं निमित्तं यस्यां साऽर्थनिबन्धना नतु स्वरूपाश्रया । प्रमाणञ्चात्र "तद्राज" सूत्रे भाष्ये अहमपीदमचोद्यं चोद्ये इति पृच्छधातुपर्यायस्य चुद्धातोरपि द्विकर्मकत्वदर्शनात । अतएव स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम् । इति भट्टिः, शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभापतेव । इति कलिदासः, उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः, इति भारविश्च सङ्गच्छन्ते इति मनोरमाकाराः । शब्दरत्नकारास्तु—"आख्यातोपयोगे" इति सूत्रे "दुह्याच्" इति परिगणनभाष्ये याच्धातोः पृथग् भिक्षिग्रहणाज् ज्ञाप्यतेऽयं सिद्धान्त इति । अन्यथा परस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्युभयानुकूलव्यारार्थकस्य [इदमवश्यं करोमीति प्रतिज्ञावाक्यप्रयोजकज्ञानविशेषरूप] स्वीकारानुकूलव्यापारार्थस्य चेत्युभयस्य याचेस्तत्र ग्रहणेन प्रथमार्थकयाचिग्रहणेनैव गतार्थत्वाद् भिक्षिग्रहणवैयर्थ्यं स्यात् । एवञ्च परिगणनातिरिक्तानां येषाम्पाठ आवश्यको विभाति द्विकर्मणान्तेषां "कर्तुः" सूत्रेणैव व्यवस्थितिः । अत एव "प्रधानकर्मण्याख्येये" इति लकारादिव्यवस्थापको भाष्यसिद्धान्तोऽपि सङ्गच्छते । अत एव च "नीवह्योर्हरतेश्चापि" इति द्विकर्मकपरिगणनं साधीय इति । एवञ्च अर्थिनश्च राजानो भवन्ति हिरण्येन इति गर्गाञ्शतन्दण्डयन्तामिति च भाष्यप्रयोगद्वये न क्षतिरिति दिक् ।

प्र० १२—ननु "कर्तुरीप्सिततमम् तथायुक्तंचानीप्सितम्" इत्येतत्सूत्रद्वयापेक्षया लाघवाद् "धातूपस्थाप्यफलशालिकर्म" इत्येकेनैव निर्वाहसम्भवे व्यर्थे ते इति चेन्न ? ग्रामंगच्छतीत्यादौ ईप्सिततमत्वोपलक्षितमुद्देश्यत्वं भासते, एतत्सूत्रद्वयकर्मत्वशक्तेरुद्देश्यतासमानाधिकरणत्वात् । अत एव "कर्मणा यमभिप्रैति" इति सूत्रे कर्मणेत्यस्याभावे गान्ददातीत्यत्र गोरप्युद्देश्यतया तत्रैव पर्यायेण सम्प्रदानसंज्ञा स्यादिति भाष्यकैयटोक्तं संगच्छते । अथ च ईप्सिततमत्वस्याभावे अग्नेर्मा-

णवकं वारयतीत्यत्र "वारणार्थानाम्" इत्यनेनापवादत्वात् कर्मसंज्ञाया बाधेनापादानत्वापत्तिः। सतीप्सिततमग्रहणे त्वीप्सितमात्रेऽग्नौ सावकाशेनानेनापादानसंज्ञाविधायकेन न बाधसम्भव इति शब्दरत्नसिद्धान्तात्।

ईप्सिततमत्वञ्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वम्। एवञ्च द्वेष्योदासीनसंग्रहार्थम् "तथा युक्तञ्च" इदमपि कर्त्तव्यम्। अनीप्सितग्रहणन्तु स्पष्टार्थमेवेति। ईप्सितानीप्सितयोः शाब्दबोधस्त्वेकरूप एव। ईप्सानीप्सादेरधिशीङादिवत् संज्ञाप्रवृत्तावुपयोगेऽपि द्वितीयावाच्यकोटावप्रवेशात्। अनन्यलभ्यो हि शब्दार्थ इति न्यायात्। सर्वत्रापि कर्मसु विहितद्वितीयानामाधारवाचकत्वम् लाघवात्। प्रकृतिप्रत्ययार्थयोश्चेहाभेदस्सम्बन्धः। तथाच हर्याधारिका या प्रतीतिस्तदनुकूलो व्यापारो वाक्यार्थत्वेन निर्णीयते इत्यादि प्रपञ्चितम्मनोरमाकृतेह संक्षतो व्याख्यातम्।

प्र० १३—कर्मसंज्ञाविधायके "दिवः कर्म च" इत्यस्याकडारीयत्वेऽपि करणशब्दानुवृत्त्या "परिक्रयणे सम्प्रदानम्"इत्यतोऽन्यतरस्यांग्रहणापकर्षणेन वा संज्ञयोः पर्य्याये लब्धे समावेशार्थश्चकारः। तेन मनसा देव इत्यत्र कर्मण्यण्प्रत्ययः करणे तृतीया चेत्युभयमपि सिद्ध्यति। नचात्र समासे सुप्लुक् शङ्कनीयः? तथापि "मनसस्संज्ञायाम्" इत्यलुग्विधानात्। नच तथापि मनसा देव इत्ययुक्तं कृद्योगलक्षणपष्ठीप्राप्तेः। नच तत्र कर्त्तृसाहचर्यात् मुख्यव्यवहृत्या धात्वर्थाश्रयकर्मण एव ग्रहणे स्तोकम्पाकादिवत् न षष्ठीति वाच्यम्? आकडारसूत्रीयकैयटानुरोधात् धात्वर्थे भेदसम्बन्धेनान्वयिकर्मग्रहणेनैव तदुपपत्तावत्राप्रवृत्तौ प्रमाणाभावात् सा दुर्वारेति वाच्यम्? अत एव अक्षैर्देवयते यज्ञदत्तेनेत्यत्र सकर्मकत्वादणि कर्त्तुर्णौ कर्मत्वाभावस्य "अणावकर्मकात्"इति परस्मैपदाभावस्य च फलत्वेनोपादानात्।

यत्तु अन्यत्र सावकाशयोः संज्ञयोर्द्वयोः अक्षैर्दीव्यति इत्यत्र संज्ञाद्वयप्रयुक्तकार्यद्वयप्रसङ्गे परत्वात् तृतीयैव स्यान्नतु द्वितीयेति तन्न? कार्यकालपक्षे एकवाक्यतारीत्या द्वितीयाया अनवकाशत्वप्रतिपादनस्य युक्तत्वात्। दिवधात्वर्थनिरूपितसाधकतमत्वशक्तेरेकत्वेन न देवना अक्षा इत्यादौ दोष इति दिक्।

प्र० १४—अयञ्च प्रश्नः पूर्वत्र २ द्वितीयप्रश्ने साधूत्तरसम्पत्त्या विभूषित इति तथैवावगन्तव्यः।

प्र० १५—"ज्ञोऽविदर्थस्य करणे, अधीगर्थदयेशां कर्मणि"इत्याद्यष्टसूत्र्यां शेष

इत्यनुवर्तते । शेषत्वेन विवक्षिते च करणादौ षष्ठी प्रसिद्धैव । नचैवं शेषे षष्ठ्येव सिद्धेति अ सूत्रोयमव्यर्थेति वाच्यम् ? इह षष्ठ्येव भवति नतु तल्डुगिति ज्ञापनेन सार्थक्यात् ।

एवञ्च लुकःप्रयोजकीभूतस्समास एव न भवतीत्यनुवदति "प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम्"इति वार्त्तिककारः । तथाच हरिस्मरणमित्यादि शेषत्वाविवक्षया कृद्योगषष्ठ्या समासेन साध्यम् । तत्र च कारकपूर्वकत्वात् कृदुत्तरपदप्रकृतिस्वरः, शेषषष्ठ्या समासे स्वनिष्टान्तोदात्तत्वापत्तेः ।

किञ्च आदिकर्मणि कर्तरि क्ते मातुःस्मृतमित्यत्र समासाऽभावोऽपि फलम् । अत एव "निष्टायां कर्मविषया"इत्यादिकारिकायसिद्धान्तोऽपि सङ्गच्छते । वृत्त्यादिग्रन्थेषु चेहोदाहरणानि तिङन्तान्ग्वेत्यादि सर्वमुपलक्षणतया नेयमिति दिक् ।

प्र० १६—ह्रस्वविधायक "गोस्त्रियोः"इति सूत्रे प्राञ्चो"गोऽन्तस्त्रियोरुपसर्जनस्य"इति पठन्ति तन्न ? चित्रगुरित्यादौ गोशब्दस्योपसर्जनत्वेऽपि तदन्तस्यातथात्वात । न च गोपदार्थस्यैव चित्रगो इति समुदायार्थस्य चित्राभिन्नगोरूपस्यान्यपदार्थोपसर्जनत्वमेवेति न दोष इति वाच्यम् ? तथापि गौरीपतिरित्यादौ अतिव्याप्तेर्दुर्वारत्वात । नचैवम् सुगोकुलम् राजकुमारीपुत्र इत्यादि कथमिति वाच्यम् ? उपसर्जनस्य सम्बन्धिकतया ह्रस्वो यस्य प्रातिपदिकस्य विधीयते तदर्थम्प्रति उत्तरपदयोर्गोस्त्रियोर्गुणीभावस्तत्रैव ह्रस्वत्वमिति कथनात । अत एव भाष्ये "अप्रधानमुपसर्जनमिति सम्बन्धिशब्दावेतौ" इत्यादिभाष्यसङ्गतिरिति दिक् ।

प्र० १७—समासान्तविषये "अन्तः" इति सूत्रभाष्योक्त्या समासचरमावयव एव सामासान्तपदार्थः । समासार्थोत्तरपदस्य वा चरमावयव इत्यर्थस्तु "सरूपाणाम्" सूत्रे कैयटेन स्पष्टमभिमतः । तेन चोपशरदमित्यव्ययीभावसमासे "नाव्ययीभावात" इति सूत्रेणाम्, द्विपुरीत्यादौ च "अकारान्तोत्तरपदो द्विगुःस्त्रियामिष्टः" इति वचनाच्च"द्विगोः"इति विशिष्टे ङीप्प्रत्ययस्साधुरिति मनोरमाकाराः ।

शब्दरत्नकारास्तु–चिन्त्य एव कैयटाद्यभिमतः पक्षः ! समासपदस्य समासार्थोत्तरपदलक्षणायाम्प्रमाणविरहात् । समासपदेन "गोस्त्रियोः"इति सूत्रभाष्ये तदर्थवाक्यस्योपचारेण ग्रहणमित्यर्थस्यैव सिद्धान्तितत्वाच्च । एवम् तथात्वे "अन्तः"इतिसूत्रभाष्यायोत्तरपदावयवत्वपक्षस्य विरोधोऽपि स्यात् ।

नच द्विपुरीत्यादावदन्तोत्तरपदकत्वाभावान्ङीप्सिद्धिःकथं स्यादितिवाच्यम् ?

लिङ्गानुशासनसूत्राणां लोकसिद्धलिङ्गानुवादकत्वेनाविधायकत्वेन चान्त्यद्विगौ स्त्री-त्वाभावनियामकत्वाभावात् । अत एव "समासान्ताः" इतिसूत्रे भाष्ये "लिङ्गम-शिष्यं लोकाश्रयत्वात्" इति सङ्गच्छते । स्पष्टञ्चेदं सर्वमपि शब्दरत्ने इति दिक् ।

प्र० १८—पञ्चमीकारके "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति सूत्रं सूत्रकृदपाठीत् । तत्र निपातानामनेकार्थत्वेन अन्यतरस्यांग्रहणं समुच्चयार्थम् । तथाच तृतीयाभावपक्षे "एनपा द्वितीया" इति द्वितीयैव स्यात् ।

यदि च सा विकल्पितेति तदा पञ्चम्यपि स्यात् । सातु नित्येवेति विभक्ति-द्वयसमावेशः कुत इति परास्तम् । तत्र मण्डूकप्लुत्या पञ्चमी, द्वितीया तु सन्नि-हितैव । इह पृथगर्थैरिति सूत्रणीये पर्यायत्रयोपादानम्पर्यायान्तरनिवृत्त्यर्थम् । तेन हिरुग् देवदत्तस्येत्यत्र नेति केचिद् वदन्ति । पृथङ्नानाञ्भिस्तृतीयाऽन्यतरस्याम् इति तु सुवचो न्यासः ! नानाञ् इति प्रत्ययग्रहणे तदन्तत्य.विनानानाशब्दयोर्ला-भात् इति दिक् ।

प्र० १९—ननु आराद् वनात् समया ग्रामम् इत्यादावव्ययीभावसमासः कुतो नेति चेन्न ! तथा सति "अन्यारादितरर्ते" इति पञ्चम्याः "अभितः परितस्समया" इति द्वितीयायाश्च विधानवैयर्थ्यापत्तेः । एतच्च रक्षितग्रन्थे ।

यद् चोत्रस्य वनादारादित्यादौ सापेक्षत्वादसमासे चारितार्थ्याद् विधानसामर्थ्यं नास्तीति तन्न ! नित्यसमासस्य न्याय्यत्वे सति चैत्रस्येत्यादिविशेषणायोगात् ।

अत एव भाष्ये "सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो न" इत्युक्तम् इति चेत् तदनित्यसमासविषयम् , नित्यसमासस्यापि सविशेषणेष्वप्रवृत्तौ महतः कुम्भस्योप इत्याद्यापत्तेः ।

शब्दरत्नकारास्तु—मध्यार्थकसमयायोगे द्वितीयाविधानस्य दूरार्थकाराच्छब्द-योगे पञ्चमीविधानस्य चारितार्थ्याच्चात्रचिन्त्यमेव सामर्थ्यकल्पनया वारणमि-ति दिक् ।

प्र० २०—सम्प्रदानसंज्ञाविधायकं "कर्मणा यमभिप्रैति" सूत्रञ्चतुर्थीकारक-प्रकरण आदौ एव स्थापितम् । तस्य च दानस्य कर्मणा यमभिप्रैति स सम्प्रदा-नसंज्ञो भवतीत्यर्थः ।

मनोरमायाम् दानस्येति प्रतीकमुपादाय तेन अजान्नयति ग्रामं, हस्तं निद-धाति वृक्षे इत्यादौ नातिप्रसङ्गः । दानग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकपरस्व-

स्वोत्पादनम् । अत एव रजकस्य वस्त्रं ददातीत्यादौ न भवति । इति वृत्तिमतम् ।

भाष्ये तु खण्डिकोपाध्यायस्तस्मै चपेटान्ददातीति प्रयोगात् नान्वर्थतायामाग्रहः । रजकस्य वस्त्रन्ददातीति तु शेषत्वविवक्षयाऽपि साधयितुं शक्यम् ।

नचैवमजां नयति ग्राममिति इहापि प्रसङ्गः ! यमभिप्रैतीत्युक्त्या यमिति विदिष्टस्य शेषित्वं कर्मणश्च शेषत्वमिति लाभेन ग्रामस्याजाम्प्रति शेषित्वाभावादिति।

शब्दरत्नकारास्तु—यद्यपि ग्रामसंस्कारार्थमजानयने तदपि ग्रामस्यास्ति तथाप्यजाया इव परत्वात् कर्तुः इति कर्मसंज्ञया बाधान्न दोष इति वदन्ति ।

इति तृतीयखण्डः ।



# नव्यव्याकरणशास्त्रिपरीक्षायाः प्रश्नपत्राणि

## मनोरमाशब्दरत्नयोः प्रश्नाः

### सन् १९३४

#### २ वर्षे १ पत्रम्

१ अट्कुप्वाङ्नुम्व्यवायेऽपीति सूत्रे मनोरमायामादर्शनेत्यत्र णत्ववारणोपायः कः प्रदर्शितः, शब्दरत्नकृता च कः प्रदर्शितः, कश्च युक्त इति समुपपादनीयम्।

२ द्वन्द्वे चेति सूत्रे समुदायस्याऽयं निषेध इति प्रतीकमुपादाय मनोरमायां किमभिहितं शब्दरत्नकृता च तत्र किमुक्तमिति विशदं निर्निगदनीयम्।

३ एरनेकाच इति सूत्रे धातुपदस्याऽनुवृत्त्याऽऽवृत्त्योः प्रमाणं फलञ्च प्रदर्श्य शब्दरत्नकृतोपदर्शितविशेषश्च संकलनीयः।

४ अष्टन आत्वस्य वैकल्पिकत्वे दीर्घादित्यस्य ज्ञापकत्वं समुपपाद्य तत्रत्यचोद्यपरिहारौ शब्दरत्नकृतोपदर्शितौ समुल्लेखनीयौ।

५ उदीचामातः स्थाने यकपूर्व्वायाः इति सूत्रे आतःस्थाने इति ग्रहणस्य प्रयोजनं सयुक्तिकमुपदर्शनीयम्।

### सन् १९३५

१ सरूपाणामेकशेष एकविभक्ताविति सूत्रे एवकाराऽपकर्षौ भाष्ये कथं ध्वनितः तदर्थश्च क्वाऽन्वेति, निरुक्तसूत्रार्थश्च कीदृशः, सारूप्यञ्च किमिति सर्वं सुलेखेन निरूपणीयम्।

२ प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रस्य विध्यर्थत्वे कानि प्रयोजनानि? कथञ्च तानि भगवताऽन्यथासिद्धानि कृत्वाऽस्य सूत्रस्य नियमार्थत्वं समर्थितं नियमाकारश्च कीदृश इति सर्वं निर्वचनीयम्।

३ दादेर्धातोर्घः इति सूत्रं मनोरमाशब्दरत्नोक्तरीत्या सम्यग् व्याख्याय तत्रोपदेशघटितव्याख्यानस्य युक्तत्वाऽयुक्तत्वे च निगदनीये।

४ साम आकम् इति सूत्रस्थससुट्कनिर्देशस्य सुण्निवृत्त्यर्थत्वं निरस्य प्रियत्वाकमित्याद्युपसर्ज्जने नुण्निवृत्तिः कथम् इति समुपपादनीयम्।

५ शूद्रा चाऽमहत्पूर्वा जातिरिति वार्तिकं मनोरमाशब्दरत्नोक्तसरणिमनुसृत्य विवृत्य जातिवाचकत्वं परिष्क्रियताम्।

सन् १९३६

१ अट्कुप्वाङ्नुम्व्यवायेऽपीति सूत्रे मनोरमायामादर्शेनेत्यत्र णत्ववारणोपायः कीदृशः प्रदर्शितः, शब्दरत्नकृता च कीदृशः स प्रदर्शितः, सिद्धान्तश्च कीदृश इति साधूपपादनीयम् । १०

२ अयचप्रसङ्गादिति कौमुदीप्रतीकमुपादाय मनोरमायां किमभिहितं, शब्दरत्नकृता च तत्र विशेषः कः प्रदर्शितो, द्विवचनत्वञ्च किमेतत्सर्व्वं निरूपणीयम् । १०

३ सर्व्वनाम्नः स्याड्ढ्रस्वश्चेति सूत्रे सर्व्वनाम्नोऽसुङ्चेति सूत्रन्यासं स्पष्टं व्याख्याय तत्रत्यशब्दरत्नकृत्कृतव्याख्यानमपि प्रदर्शनीयम् । १०

४ युष्मदस्मद्भ्यांङसोऽशितिसूत्रविहितादेशशित्त्वप्रयोजनं मनोरमाशब्दरत्नोक्तरीत्या सुस्पष्टं प्रतिपादनीयम् । १०

५ अनुपसर्जनादिति सूत्रस्य स्त्रीप्रत्ययेषु तदन्तविधौ ज्ञापकत्वमुपपाद्य तत्रत्यमुपसर्जनत्वञ्च परिष्कृत्य स्त्रीत्वशब्दाददन्तलक्षणटाब्वारणोपायः समुपदर्शनीयः । १०

६ इन्द्रवरुणभवशर्व्वरुद्रेत्यादिसूत्रविहितानुगागमे दीर्घकरणप्रयोजनमुपदर्श्य नृनरयोर्वृद्धिश्चेति वचनं व्याख्येयम् । १०

सूचना—एषु पञ्चैव प्रश्नाः समाधेयाः ।

सन् १९३७

२ वर्षे १ पत्रम् ।

१ प्रातिपदिकसंज्ञाविधायकसूत्रद्वये प्राचीनाभिप्रेतं सप्रमाणमर्थवत्त्वमुपपाद्य लक्षणान्तरप्रतिपादकशब्दरत्नकृद्हृदयं निरूप्य, युक्तियुक्तं तत्स्वरूपं समर्थनीयं तच्च प्राचीनैर्वक्तुं शक्यते नवेत्यपि स्फुटं स्फोरणीयम् । १२

२ मातृभोगीणः, गन्धर्व्वगानम्, रामनरेगेत्यादावव्याप्त्यतिव्याप्तिपरिहारक्षमं सपदकृत्यं सलक्षणसमन्वयं समानपदत्वं प्रदर्शनीयम् । ८

३ 'दादेर्धातोर्घः' इत्यत्र मनोरमाशब्दरत्नकृन्मतं तत्तन्मतानुकूलसाधनैः समर्थ्य तत्र सूक्ष्मसमीक्षया युक्तं मतं निरूप्य तत्र साधकयुक्तयोऽभिधीयन्ताम् १२

४ अष्टनो दीर्घादिति सूत्रस्थदीर्घग्रहणस्यात्ववैकल्पिकत्वज्ञापकता साधु समर्थनीया । १०

५ 'डाबुभ्याम्' इति सूत्रे मनोरमाशम् 'अन उपधे'त्युत्तरसूत्रस्य नियमार्थत्व-

मुक्तं तत्फलञ्च सुपर्व्वेत्यादौ ङीब्निवृत्तिरुक्ता, बहुराज्ञीत्यादौ ऋन्नेभ्य इत्येव ङीप् इत्युक्तम् । शब्दरत्नकृता च नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरित्यभिमानेनेदमुक्तमित्युक्तम्, वस्तुतस्तत्र कस्याभिमान इति विशदं विवेचनीयम् । ८

## वैयाकरणभूषणसारे प्रश्नाः ।

सन् १९२५

१ परमतं निराकृत्य कर्तृकर्मणोराख्यातार्थत्वं सप्रमाणमुपपाद्यताम् ।

२ कर्तृकर्मणोः किं लक्षणं कतिविधे च काश्च ताः विधाः परकीयलक्षणं च कथं दूषितम् ।

३ समासे शक्तिः कथं स्पष्टीकृता तत्र परमतं कथं निराकृतम् ।

४ शक्तिः का ? असाधुषु विद्यते न वा तथा लक्षणा गतार्था न वा ।

५ नामार्थाः कति ते च के ।

सन् १९२६

१ 'फलव्यापारयो' रिति द्विवचननिर्देशसूचितं धात्वर्थविषये प्राचीनमतमुपपाद्य तस्य युक्तायुक्तत्वं स्फुटमुपपाद्यताम् ।

२ भाष्योक्ताक्षेपपरिहारपूर्वकं वर्तमानसत्तां स्थिरीकृत्य किन्तदिति स्पष्टमभिधीयताम् ।

३ परसमवेतत्वं द्वितीयावाच्यकुक्षौ किमर्थमन्यैः सन्निवेश्यते तदुपपाद्यान्यथा साध्यताम् ।

४ अभेदानुकरणे आनुपूर्व्याः उपस्थितिः शाब्दबोधविषयता च युक्त्योपपाद्यताम् ।

सन् १९२७

१ प्रतीतेः स्वमते साधकत्वं परमुखेन निराकृत्य स्वमतेन सबीजं कर्तृकर्मणोराख्यातार्थत्वं साधयन्तु । १०

२ व्यापारो भावना सैवोत्पादना सैव च क्रिया ।
कृञोऽकर्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते ॥
इति पद्यमुपक्रमोपसंहारपुरस्सरं व्याख्येयम् । १०

अथवा

सिद्धान्ते व्यापारमुख्यविशेष्यको बोधस्तिङन्त इति समुपपाद्य तद्विषये

तार्किकोक्तकोलाहलो निरोद्धव्यः । १०

३ शाब्दीयपुंस्त्वादिलिङ्गस्वरूपं निरूप्य तस्य शब्दनिष्ठत्वार्थनिष्ठत्वयोर्युक्तत्वायुक्तत्वे निदर्शनीये । १०

४ लक्षणावृत्तिस्वीकारे कीदृशं कार्यकारणभावद्वयं कर्मत्वे स्यात् परनये सिद्धान्ते च कथं न तद् इति समुपपाद्य शक्तिघटितकार्यकारणभावेनैव लक्ष्यार्थस्थलेऽपि कथं न निर्वाह इति समाधेयम् । १०

५ समासे भिन्नशक्तिः परमतनिरसनपुरःसरं साधनीया । १०

सन् १९२८

१ मीमांसकाभिमतं तिङर्थं निरस्य धातोः शक्यतावच्छेदकं निरूप्य फलव्यापारयोः परस्परावच्छिन्नयोः शक्यत्वस्वीकारे बाधकं नवेति विवेचनीयम् । १२

अथवा

चैत्रश्चैत्रं गच्छतीत्यापत्तिः कथं परिहृता ग्रन्थकृता । नैयायिकमते च कथं तत्परिहार इति निरूप्य भूतभविष्यतोः फलाश्रयत्वं समर्थनीयम् १२

२ पुंस्त्वादीनां स्वरूपप्रदर्शनपुरस्सरं तेषां शब्दगतत्वमर्थगतत्वं वेति प्रतिपाद्य केन सम्बन्धेन कुत्रान्वयो युक्तियुक्त इति निरूपणीयम् । ८

३ समासे विशिष्टशक्त्यस्वीकर्तृमते प्राप्तोदक इत्यत्र शाब्दबोधप्रकारमुपपाद्य तन्मतं निरसनीयम् । १०

४ लक्षणावादिमतेऽपि शक्तिघटितः कार्यकारणभाव उपपाद्य दूषणीयः । १०

५ स्फोटात्मकवर्णस्यैकत्वं समर्थ्योदात्तत्वादिकं वर्णनिष्ठं नवेति निरूपणीयम् । १०

सन् १९३०

१ आख्यातवाच्या भावनेति पक्षे किम्मानम् ? कस्य चैतन्मतम् ? एतस्यायुक्तत्वे कानि प्रमाणानि ? सम्बन्धमात्रमुक्तं चेत्यादिश्लोकार्थः कः ? एतत्सर्वं सम्यङ् निरूप्यताम् ।

२ चैत्रो ग्रामं गच्छति, इत्यत्रापादिता दोषा निराक्रियन्ताम् ।

३ समासेऽतिरिक्ता शक्तिर्मतान्तरनिरासपुरःसरं साधनीया ।

४ निपातानां द्योतकत्वं चेति परमतनिराकरणपूर्वकं सम्यगुपपादनीयम् ।

५ अष्टौ स्फोटान् संक्षेपेणोपवर्ण्य तत्र सिद्धान्तपक्षो युक्त्या समर्थनीयः ।

[ सर्वे प्रश्नाः समानाङ्कभागिनः । ]

सन् १९३१

१ मीमांसकैरभिप्रेत आख्यातार्थो निरूप्यताम् । वैयाकरणसिद्धान्तस्थापनेऽत्र प्रयत्यताम् ।

२ भूतत्ववर्त्तमानत्वभविष्यत्वं क्रियागतम् । हीनदोषं परिष्कृत्य लिङर्थः प्रतिपाद्यताम् ॥

३ "धातुनोक्तक्रिये नित्यं कारके कर्त्तृतेष्यते" । इति वाक्यपदीयेन व्याससूत्रं निरुद्ध्यते ॥ उपपाद्य विरोधं तं समाधाय सयुक्तिकम् । निरोधो व्याससूत्रेण करणत्वे निरूप्यताम् ॥

४ नैयायिकाभिमतशक्तिपदार्थरूपं सम्यक् प्रदर्श्य निराकुरु तन्मतं तत् । यत्कौण्डभट्टगदितं कलितं च युक्त्या स्वोक्त्या निरूप्य समस्तमपास्तदोषम् ॥

५ समासशक्तिं प्रतिपाद्य युक्त्या मीमांसकानां विमतिस्तथा चेत् । तस्याः प्रशान्तौ प्रयतस्व तीव्रं तदीयसिद्धान्तवचःप्रमाणैः ॥

६ अङ्गाङ्गिभावं प्रतिपद्यमानाः स्फोटाः समासेन निरूपणीयाः । वाक्यार्थशक्तिग्रहणेऽभ्युपायः प्रदर्शनीयो निजपक्षसिद्ध्यै ॥

अवधेयम्—रससंख्यामिताः प्रश्नाः सर्वे तुल्याङ्कभागिनः । पञ्च तत्र समाधेयाः परीक्षोत्तीर्णतार्थिभिः ॥

सन् १९३३

१ आख्याते लक्षणादिना समुपस्थितस्याऽऽश्रयस्य बोधोपपत्तौ लः कर्मणि चेत्याद्युपन्यस्य भूषणकृता तस्य प्रत्ययार्थत्वं कया रीत्या प्रसाधितमिति विशदनीयम् ।

२ सम्बोधनादिपदार्थोऽष्टकस्य कथं क्रियाऽन्वयस्तत्र च व्यापाररूपक्रियाग्रहणे प्रमाणं किमिति सर्वमुपपादनीयम् ।

३ सलक्षणं सोदाहरणं च कर्मभेदाः प्रकाशनीयाः ।

४ जहत्स्वार्थादिवृत्तिविशेषान् प्रदर्श्य सिद्धान्ते समासादिवृत्तौ भिन्ना शक्तिः सप्रमाणं निरूप्यताम् ।

५ अपभ्रंशानां साक्षाद् वाचकत्वं परम्परया वेति सारोक्तरीत्या सप्रमाणं निर्वचनीयम् ।

सन १९३५

१ व्यापारो भावनेतिकारिका विशदं व्याख्येया ।

२ लिङ्थें वादिनां विप्रतिपत्तीः प्रदर्श्य वैयाकरणसिद्धान्तं स्फुटमुपपाद्य "वि-व्यादीनामुपादानं चतुर्णामादितः कृते"ति कारिका व्याख्येया ।

३ क्रियाजन्यफलाश्रयस्य कर्मत्वे चैत्रश्चैत्रं गच्छतीत्यत्र प्राप्तं दोषं निवार्य प्रासनवन्मैत्रावरुणाय दण्डं प्रयच्छतीति विहितं दण्डदानं न प्रतिपत्तिः किन्तु चतुर्थीश्रुत्याऽऽर्थकर्मेति ग्रन्थो विशदं व्याख्येयः ।

४ समासे विशिष्टशक्तिवादिनां मतेऽवयवानां निरर्थकत्वं सार्थकत्वं वा ? आद्येऽर्थवत्समुदायानां समासग्रहणं नियमार्थमिति भाष्यविरोधः परिहरणीयः, द्वितीये विशिष्टशक्तेरुपयोगः समर्थनीयः ।

५ 'वाक्यस्फोटोऽतिनिष्कर्षं तिष्ठतीति मतस्थिति' रिति कारिकांश इतरपक्ष-निराकरणपुरस्सरं वैशद्येनोपपादनीयः ।

सन् १९३५

१ परमतनिरसनपुरःसरं कर्तृकर्म्मणोराख्यातार्थत्वमुपपाद्यताम् ।

२ अपादानलक्षणं निरुच्य लक्ष्येनुसमन्वीय कर्म्मभेदा उदाहरणैः स्पष्टी-करणीयाः ।

३ वर्त्तमानत्वमतीतत्वं भविष्यत्वं च निर्दोषं परिष्कृत्य लक्ष्येषु च समन्वीय लिङर्थः सप्रमाणं प्रतिपाद्यम् ।

४ नैयायिकमतनिरसनपुरःसरं स्वसिद्धान्तसम्मतं शक्तिस्वरूपं निरूप्य लक्ष-णाया अतिरिक्तवृत्तित्वं निरस्यताम् ।

५ अष्टानां स्फोटानां स्वरूपाणि पृथगुपदर्श्य तेषु सिद्धान्तपक्षमुपपाद्य नित्या-नां वर्णानां समुदायादेवार्थावबोधसम्भवे स्फोटाङ्गीकारो व्यर्थं इति परेषां शङ्का समाधीयताम् ।

६ निपातानां द्योतकत्ववाचकत्वपक्षयोर्युक्ततरः पक्षः परमतनिरासेन स्थापनीयः।

सूचना—सर्वे प्रश्नाः समानाङ्कभागिनः । स्वेच्छया पञ्च समाधेयाः ।

सन् १९३६

१ व्यापारो भावना सैवोत्पादना सैव च क्रिया ।
कृञोऽकर्म्मकतापत्तेर्नहि यत्नोऽर्थ इष्यते ॥
इति कारिकां भूषणकाररीत्या सावतरणं व्याख्याय तद्व्याख्यानस्य पूर्वापरसन्दर्भानुगुण्यं कारिकाक्षरानुगुण्यं च विवेचनीयम् । १०

२ साधुत्वमष्टकस्यास्य क्रिययैवाऽवधार्य्यताम् ।

इत्यत्र प्रतिपादितमष्टकं शब्देन निर्दिश्य तस्य क्रियाऽन्वय एव साधुत्वे प्रमाणमुपदर्श्यताम् । १०

३ एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा ।

इति पञ्च पक्षान् समर्थ्य षट्कपक्षोऽपि समर्थनीयः । १०

४ "अपष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना ।

क्लृप्तत्यागश्चास्ति तवे"त्यत्र "तव" पदेन कोऽभिप्रेतः ? तन्मते व्युत्पत्त्यन्तरकल्पना क्लृप्तत्यागश्च कथमिति निरूप्य स्वमतमुपक्षिप्य तत्र लाघवं प्रदर्शनीयम् । १०

५ वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः ।

इत्यत्र प्रतिपादितो वाक्यस्फोटः कीदृशोऽभिप्रेतः ? वाक्यार्थस्यापूर्वत्वात्तत्पक्षे शक्तिग्रहः कथमुपपद्यते ? वैयाकरणमते स्फोटब्रह्मणोर्भेदोऽभेदो वा ? सर्वमेतन्निरूप्यताम् । १०

सन् १९३७

१ व्यापारस्य धातुवाच्यत्वं केन रूपेण कथं कथं च धातूनां नानार्थकत्वं नेति साधु प्रतिपादनीयम्, वक्तव्यं च गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यत इति वाक्यपदीयकारिका केनाऽभिप्रायेण सार उपन्यस्तेति । १०

२ लिङर्थं सारोक्तरीत्या निरूप्य निर्दुष्टं वर्तमानत्वं परिष्करणीयम् । १०

३ पञ्चमीविभक्त्यर्थः कः किं च तल्लक्षणमिति निरूप्य, परस्परान्मेषावपसरत इत्यत्र पञ्चमी ग्रन्थकृता कथं संस्थिता तच्च युक्तं नवेति साधु विवेचनीयम् । १०

४ नैयायिकादिसम्मतलक्षणावृत्तिस्वीकारे किं गौरवं प्रदर्शितं सारकृता, कथं च स्वमते न तदिति साधु निरूपणीयम् । १०

५ प्रातिपदिकप्रकृतिकभावार्थकप्रत्ययानामर्थं निरूप्य, मीमांसकमतेऽत्रत्येऽर्धजरतीयत्वमुपपादनीयम् । १०

६ कति स्फोटाः के च ते ? तेषु मुख्यश्च कः ? कथञ्च किमर्थञ्च तदाश्रयणमेतत्सर्वं विस्पष्टमुपपादनीयम् । १०

सूचना—एषु स्वेच्छया पञ्चैव समाधेयाः ।

## परिभाषेन्दुशेखरे प्रश्नाः ।

### सन् १९०७

१ यदागमपरिभाषाया अनित्यत्वे किं प्रमाणं तेन तस्याः वर्णग्रहणेऽप्रवृत्तिः बोधयितुं शक्यते न वेति विविच्योच्यताम् ।

२ गौणमुख्यन्यायस्य पदकार्यत्वे का युक्तिः किञ्च फलं, पदकार्यस्य च किं स्वरूपम् ।

३ जानस्य बहिरङ्गस्यासिद्धत्वे प्रमाणं फलं चोपपाद्य फलांशेऽन्यथा सिद्धिः संभवति न वेति सोपपत्तिकमुच्यताम् ।

४ अकृतव्यूहपरिभाषायाः फलं प्रमाणं च किं तस्याः खण्डनप्रकारश्च नागेशेन कथं प्रदर्शितः स च युक्तो न वेति विविच्योपपाद्यानन्यथासिद्धं प्रयोजनमस्ति न वेति वाच्यम् ।

५ श्रुतानुमितयोरिति परिभाषायाम् प्रमाणं फलञ्च किम् ।

### सन् १९०९

१ अनुबन्धेष्वेकान्तत्वानेकान्तत्वयोः कतरत्सुन्दरमिति नातिविस्तरेण लिख ।

२ तमपः कथमनेकविधान्तर्यंगमकता इति विस्पष्टमुच्यताम् ।

३ पुनःप्रसङ्गसकृद्गतिन्याययोः कैयटोक्तबीजमुपपाद्योद्दूष्य च स्वयं सिद्धयुपायं लिख ।

४ अन्तरङ्गपरिभाषायां अथकृतबहिरङ्गताऽनादरः प्रसाध्यताम् ।

५ वार्णपरिभाषायाः समानकर्यिताद्वयी कस्य हेतोरन्वधावि सा च केति निरूप्यताम् ।

६ गुणानां भेदकत्वतदभावयोः कतरस्मिन्निर्भर इति विस्तरेण लिख ।

७ श्तिपा शपेति प्राचीनकोलाहलो निरूप्यताम् ।

### सन् १९११

१ यद्यपीदं तत्रासिद्धमिति वाक्यं विवृत्य पूर्वंधातुरुपसर्गेणेति मते यदागमपरिभाषावतरणफलान्यथासिद्धिं परिहर ।

२ अकचूसहितस्य निर्दिश्यमानता अस्ति न वेति विविच्योच्यताम् ।

३ विकरणेभ्यो नियमो बलीयान् इति सविस्तरं व्याख्याय यत्तु योऽर्थवा-निति व्यपदेशिवत्परिभाषोपदर्शितं कैयटं दूषय ।

४ अर्थकृतबहिरङ्गतायाः सविस्तरखण्डनपुरस्सरं पूर्वं धातुरुपसर्गेणेति पक्षमुद्दूष्य अनुदात्तङित इति सूत्रे कैयटोक्तां लकारविशेषापेक्षित्वादिबहिरङ्गतां च दूषय ।

५ येन नाप्राप्त इत्यनेन बाध्यताबीजमवधानदानेन लिख ।

६ हलूस्वरोत क्वचित् स्वार्थिकेति च परिभाषाद्वयं लिख ।

## सन् १९१२

१ कार्यमनुभवन् इति परिभाषा द्विर्वचनेऽचीति भाष्ये कथं ध्वनिता किञ्चास्याः असाधारणं फलम् ।

२ ऊडिदमित्यत्र फलाभावे ऊड्ग्रहणं कथमन्तरङ्गपरिभाषायां ज्ञापकम् कानि चास्याः फलानि त्रिपादोत्थे आभीये चान्तरङ्गे एतदप्रवृत्तौ प्रमाणफलानि सम्यक् प्रदर्शय ।

३ गामादाग्रहणेष्वविशेषः इति परिभाषा सविशेषं व्याख्येया ।

४ अर्धमात्रालाघवेनेति परिभाषा व्याख्येया ।

५ लक्ष्ये लक्षणमित्यत्र किं मानम् किञ्च तल्लक्ष्यत्वं येन षट्सन्त इत्यत्र ण्यन्ताण्णिच् इत्यत्र च न्यायो न प्रवर्तते, दीव्यति इत्यत्र प्रवृत्तिरिति सुस्पष्टं व्याख्येयम् ।

## सन् १९१३

१ यदागमपरिभाषायाः ग्रन्थकृदभिमतमनित्यत्वमुपपाद्यान्याभिमतमनित्यत्वं च निराकृत्य उभयोः कतरद्युक्तमिति साधु सिद्धान्तय ।

२ एकदेशविकृतमनन्यवदित्यवतरणं प्राचीननव्योभयमतेनोपपाद्यैकदेशविकृतत्वात् अक्तपरिमाणत्वे पदकृत्यप्रदर्शनपुरस्सरम् परिष्करणीये ।

३ अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते इत्यत्र ज्ञापकं सम्प्रदर्श्यान्तरङ्गनिमित्तविनाशकलुकः प्राबल्यबोधकत्वे सप्रमाणं फलं निरूप्यताम् ।

४ अभ्यासविकारेषु बाध्यबाधकभावो नास्तीति परिभाषायाः अर्थं संप्रदर्श्य ज्ञापकं च उपपादयत ।

५ अन्त्यविकारेऽन्त्यसदेशस्येत्यस्याः फलानि प्रदर्श्य तानि च निराकृत्या-न्त्यसदेशत्वम् परिष्कुरु ।

६ उपपदविभक्तेः कारकविभक्तिर्बलीयसी इत्यत्र का वाचो युक्तिः इति निरूप्यताम् ।

सन् १९१४

१ अनुबन्धानामेकान्तत्वानेकान्तत्वपक्षौ सम्यगुपपाद्य तयोः कतरद्युक्तमि-त्युपपाद्यताम् ।

२ गौणमुख्यन्यायस्य पदकार्यविषयत्वे का युक्तिः किञ्च फलं पदकार्यत्वस्य किं स्वरूपम् ।

३ जातस्य वहिरङ्गस्यासिद्धत्वे प्रमाणं फलं चोपपाद्य फलांशे अनन्यथा सिद्धिः सम्भवति न वेति सोपपत्तिकमुच्यताम् ।

४ अकृतव्यूहपरिभाषायाः फलं प्रमाणं च किम् तस्याः खण्डनप्रकारश्च नागे-शेन कथं प्रदर्शितः स च युक्तो न वेति विविच्योपपाद्य तस्याः अन्यथासिद्धप्रयो-जनमस्ति न वेति विविच्योच्यताम् ।

५ श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान् इति परिभाषायां प्रमाणं फलं चोच्यताम् ।

सन् १९१५

१ यदागमपरिभाषायाः अनित्यत्वे किं प्रमाणम् तेन तस्याः वर्णग्रहणे अप्रवृ-त्तिर्बोधयितुं शक्यते न वेति विविच्यताम् ।

२ वर्णग्रहणे नास्ति प्रत्ययलक्षणम् इति परिभाषायाः प्रमाणं फलं च लिख ।

३ सकृद्गतिपुनःप्रसङ्गविज्ञानपक्षयोः बीजमुपन्यस्य कैयटोक्तिं दूषयत ।

४ वार्णादाङ्गं बलीय इति परिभाषायाः ज्ञापकं विषयञ्च सम्यग् वदत ।

५ उपपदविभक्तेः कारकविभक्तिर्बलीयसीति परिभाषा वाचनिकी न्यायसिद्धा वेति—सम्यगुपपाद्यताम् ।

सन् १९१६

१ कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते इति परिभाषा भाष्ये कथं ध्वनिता ।

२ निर्दिश्यमानपरिभाषा भाष्ये किंमूलिका किं च तत्र निर्दिश्यमानत्वम् कया रीत्या चेयङ्ङवङो ङित्त्वस्यान्त्यादेशार्थता कथञ्च शीङ्रितोर्ङित्त्वस्य स्पष्टार्थता।

३ उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् इति परिभाषायाः प्रमाणं फलञ्च प्रपञ्चय।

४ अभ्यासविकारेषु बाध्यबाधकभावो नास्तीति परिभाषायां प्रमाणं स्पष्टमुपपाद्य तदर्थविषये कैयटोक्तिम् दूषय।

५ "संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः" इत्यत्र ज्ञापकं किम्। तदर्थश्च कः कथंचैनेय इत्यादिसिद्धिरित्येतत्सर्वं स्पष्टं निरूपणीयम्।

सन् १९१७

१ यदागमपरिभाषाया अनित्यत्वे किं प्रमाणं तेन तस्याः वर्णग्रहणेऽप्रवृत्तिर्बोधयितुं शक्यते न वेति विविच्योच्यताम्।

२ गाणमुख्यन्यायस्य पदकार्यत्वे का युक्तिः किञ्च फलम् पदकार्यस्य च किं स्वरूपम्।

३ जातस्य वहिरंगस्यासिद्धत्वे प्रमाणं फलञ्चोपपाद्य फलांशेऽन्यथासिद्धिः संभवति न वेति सोपपत्तिकमुच्यताम्।

४ अकृतव्यूहपरिभाषायाः फलं प्रमाणं च किम् तस्याः खण्डनप्रकारश्च नागेशेन कथं प्रदर्शितः स च युक्तो न वेति विविच्योपपाद्य तस्या अनन्यथा सिद्धं प्रयोजनमस्ति न वा।

५ "श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्" इति परिभाषायाम् प्रमाणं फलं च लिख।

सन् १९२२

१ कार्य्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते इत्यस्य मूलोक्तं फलं तिरस्कृत्य फलान्तरं प्रदर्श्य द्विर्वचनेऽचीति भाष्यात् अस्याः ध्वननञ्च वक्तव्यम्।

२ "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" इत्यस्य ज्ञापकफले प्रदर्श्य अतृणेट् मिम्रशीरित्यादौ प्रत्ययलक्षणप्रकारश्च वक्तव्यः।

३ "पुनः प्रसङ्गविज्ञानसकृद्गताविभ"त्यनयोः कैयटोक्तज्ञापकमुपन्यस्य तत तिरस्कृत्य स्वमते दत्त ज्ञापकं वदन्तु।

४ "प्रत्ययग्रहणे चापञ्चम्याः" इत्यस्याः कोऽर्थः फलञ्च किम् तत्फलं निर्दिश्यमानपरिभाषया वारयितुं शक्यते न वा, आद्ये फलान्तरं वक्तव्यम्, अन्त्ये युक्तिः प्रदर्शनीया।

६ येन नाप्राप्तन्यायेन बाधस्थले कीदृशो बाधः क्व भवति तदुक्तं प्रमाणस्य वक्तव्यम् ।

सन् १९२३

१ अध्येताशयितेत्यनयोः फलत्ववारणोपायं प्रदर्श्याशक्यवारणफलं कार्य्यमनुभवन्नित्यस्याः प्रदर्शनीयम् न्यायसिद्धत्वमस्याः उपपादनीयञ्च ।

२ यदागमपरिभाषायाः अस्वीकारे कस्य वैयर्थ्यं स्वीकारे च कस्य वैयर्थ्यम् व्यर्थीभूताभ्यां ताभ्याम् यद् यद् ज्ञापितं तत्प्रदर्श्यं तदुद्धारोऽपि प्रदर्शनीयः ।

३ एकदेशविकृतमनन्यवदित्यस्यार्थो ज्ञापकमन्यथासिद्धं फलञ्च प्रदर्शनीयम् अस्तपरिमाणत्वञ्च किम् ।

४ आद्यन्तयोरपूर्वत्वमनुत्तरत्वञ्च लक्षणमङ्गीकृत्य व्यपदेशिवदेकस्मिन् , इति तिरस्कर्तुं शक्यते न वेति सयुक्तिकं कथयन्तु एकपदार्थमुक्त्वा फलन्तस्य वक्तव्यम् ।

५ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमित्यस्याः ज्ञापकफले प्रदर्श्यापिग्रहणफलं दर्शयत ।

सन् १९२४

१ नन्वेकान्तत्वपक्षेऽप्यनुबन्धन्निर्मुक्तस्यैवोपस्थित्या तस्यैव चादेशत्वेन कथमौशादेस्सर्वादेशत्वम् सूत्रे शिद्ग्रहणमन्तरा ?सद्धन्तद्युक्तियुक्तमुच्यताम् ।

२ स्नात्वाकालकीकृत्य व्याघ्रपात्पदः अनयोर्लघब.देशपदादेशयोरभावः सजूस्सजूर्भ्यामित्यत्रादौ रुत्वञ्च भवति येन स उपायो वक्तव्यः ।

३ व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्यस्यार्थो ज्ञापकमुदाहरणञ्च वक्तव्यम् ।

४ प्रत्ययग्रहणे चापञ्चम्याः एतस्याः ज्ञापकमुदाहरणञ्चोक्त्वा निर्दिश्यमानपरिभाषया फलसिद्धिः कुतो नेति वक्तव्यम् ।

५ धातोः कार्यमुच्यमानन्तत्प्रत्यये भवति इत्यस्य ज्ञापकफले वर्णयित्वा नग्न्यामित्यादौ कुत्वाभावे कथन्न भवतीयमिति वर्णय ।

सन् १९२५

१ अर्थवद्ग्रहणपरिभाषायाः न्यायसिद्धत्वसूत्रसिद्धत्वयोरविकलं प्रकारं प्रदर्श्य तयोर्युक्तायुक्तत्वे सोपपत्त्युपपादनीये ।

२ भाव्यमानेन सवर्णग्रहणपरिभाषा प्राङ्नव्यमतविशेषोपपादनपूर्वकं सप्रमाणं विवेचनीया ।

३ अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते इति परिभाषा फलप्रमाणाभ्यां प्रमापणीया, लुक्पदापिपदाभ्यां विवक्षितार्थश्च बाधकपरिहारपूर्वकमुल्लेखनीयः ।

४ उपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वस्य बीजफले प्रदर्श्य कारकविभक्तेरनतिप्रसक्तस्वरूपं निरूपयत ।

५ लक्षणप्रतिपदोक्तन्यायः परिष्कृत्य लक्ष्येषु संगमनीयः ।

सन् १९२६

१ यदागमपरिभाषा वर्णग्रहणे न प्रवर्त्तते इति मते प्रदर्शितान् दोषानुपपाद्य तेषामुद्धारोऽपि यथासामर्थ्यमुपपाद्यः ।

२ कार्य्यमनुभवन् हि कार्यीति परिभाषायाः ज्ञापकफलख्वननानि वक्तव्यानि फलञ्चावतरणातिरिक्तं वक्तव्यम् ।

३ वर्णाश्रये नास्तीति परिभाषाया ज्ञापकमवतरणे नलुमताङ्गस्येत्यस्य प्रवृत्त्यभावो वर्णप्राधान्यञ्च वर्णनीयम् ।

४ एधते पचते इत्यत्रात्मनेपदनियमप्रवृत्तये कति के प्रकारा आश्रिताः ।

५ अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इत्यस्य ज्ञापकमुपपाद्य लुङ्मात्रविषयत्वं न वेति युक्तिफलसहितं वदन्तु ।

सन् १९२९

१ गौणमुख्यन्यायस्य उपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्यविषयकत्वे प्रातिपदिकाद इव निपातपदेनाऽप्यप्रवृत्त्यापत्तौ गोऽभवदित्यादौ प्रगृह्यापत्तिः, तां व्युदस्य, अग्नीषोमौ माणवकौ अग्निसोमौ माणवकौ इति समानार्थे प्रयोगे एकदेवत्वपरत्वे अन्यत्र नेति व्यवस्थापयत ।

२ स्त्रीप्रत्यये चानुपसर्जन नेति परिभाषापेक्षितमुपसर्जनत्वं परिष्कृत्य नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रेवाति कारीषगन्ध्यापुत्र इत्यत्रापि ष्यङ इति सम्प्रसारणं स्यादित्यवतारग्रन्थः साधु संयोजनीयः ।

३ द्वयोः कार्ययोर्यौगपद्यासंभव एव विप्रतिषेधशास्त्र पयोगीति कैयटग्रन्थस्य 'विधेये निमित्तानन्तर्यविशेषया परतया' नागेशव्याख्यानमायुष्मतं रोचते न वा । नो चेदुपपाद्य निरस्य, स्वयं कैयटोक्तं विरोधं समालोचयत ।

४ "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते" इति परिभाषाघटकस्यापि-शब्दस्य स्वारस्यमुपपाद्य तत्फलं निभालयत ।

५ "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" अस्याः परिभाषायाः फलं ज्ञापकं चोपन्यस्य परिभाषापेक्षितं प्रतिपदोक्तत्वं समन्वयपुरःसरं स्फुटं परिष्कुरुत ।

## सन् १९३०

१ कार्यमनुभवन्निति परिभाषाया अवतरणाशयमसाधारणफलञ्च सम्यङ्निरूप्य भाष्यध्वनितत्वं निपुणं प्रतिपादयत ।

२ वर्णाश्रये नास्ति प्रत्ययलक्षणमिति परिभाषाया अवतरणाशयं फलप्रमाणे चोपपाद्य वर्णप्राधान्यं परिष्कुरुत ।

३ बहिरङ्गपरिभाषायाः प्रवृत्तिलिंगप्रमाणं तत्रत्यांगपदार्थञ्च प्रदर्श्य जातासिद्धत्वस्यानन्यथासिद्धं फलं सम्यगुपपाद्यताम् ।

४ वार्णादाङ्गं बलीय इति परिभाषाया ज्ञापकं फलञ्चोपदर्श्यास्याः प्रवृत्तिस्थलमनुगतरूपेण निरूप्यताम् ।

५ उपसंजनिष्यमाणन्यायेनैव व्याघ्रीत्यादीनां सिद्धौ गतिकारकोपपदानामिति परिभाषाया अवतरणं कथं सङ्गच्छते, किञ्चास्यां मानम् कारकतद्विशेषयोरुपादान एवैषा प्रवर्तत इति कथं शेखरकृता निराकृतम्, तद्युक्तं न वेति स्पष्टं लेख्यम् ।

अथवा

संनियोगशिष्टानामन्यतरापाय इति परिभाषायां ज्ञापकं फलञ्च सम्यगुपवर्ण्य कैयटमतं निरस्य ऐनेय इत्यादिलक्ष्याणामन्यथासिद्धिं च विधायास्या लुग्विषयकत्वं निराकरणीयम् ।

## सन् १९३१

१ संज्ञापरिभाषयोर्यथोद्देशपक्षविषये नव्यप्राचीनयोर्मते सम्यगुपपाद्य तत्र युक्तायुक्तत्वे विवेचनीये ।

२ सूत्रभाष्यमते समनुसृत्य निर्दिश्यमानपरिभाषायां प्रमाणं प्रदर्श्य जराजरसौ सजूः सजूर्भ्यामित्यनयोरविरोधेन निर्दिश्यमानत्वं परिष्कृत्यास्या अनन्यथासिद्धं किमपि फलं सम्भवति न वेति विचार्यताम् ।

३ "व्यपदेशिवदेकस्मिन्" इति परिभाषायामपेक्षिते आदित्वान्तत्वे सूत्रवा-

त्तिकभाष्यानुसारेण परिष्कृत्यास्याः प्रवृत्तिस्थलं च प्रदर्श्य "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" इति परिभाषायाः फलप्रमाणे निरूपणीये।

४ अपवादत्वं परिष्कृत्य बाधबीजानि सोदाहरणानि प्रतिपाद्यात्रानुगतेन केनचिदेकेन बाधबीजेन निर्वाहः सम्भवति न वेति निरूप्यताम्।

५ 'अनन्त्यविकारेऽन्त्यसदेशस्य' इति परिभाषायाः फलप्रमाणे सम्यगुपपाद्यान्त्यसदेशत्वं निर्दोषं परिष्क्रियताम्।

सन् १९३२

१ प्रणिदापयति, प्रनिदारयतीत्यादौ णत्वतदभावौ, 'दिदीये' इत्यादौ यणाद्यभावञ्च सोपपत्तिकमुपपाद्य यदागमपरिभाषायाः स्थानिवत्सूत्रेण गतार्थत्वमाशङ्क्य परिह्रियताम्।

२ स्त्रीप्रत्यये चानुपसर्जनेनेति परिभाषाया अर्थमवतरणाशयञ्च सम्यगुपवर्ण्यात्र शेखरकृदभिमतमुपसर्जनत्वं परिष्कृत्य तद्युक्तायुक्तत्वे विवेचनीये।

३ 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इत्यत्र मतभेदप्रदर्शनपुरःसरं ज्ञापकत्वं सम्यगुपपादनीयम्।

४ अभ्यासविकारेषु बाध्यबाधकभावाभावे ज्ञापकं सम्यगुपपाद्योभयशास्त्रप्रवृत्तिक्रमो निरूप्यताम्।

५ उपपदविभक्तेः कारकविभक्तिर्बलीयसीत्यत्र बीजमुपवर्ण्यास्या न्यायसिद्धत्वं निराकृत्य कारकविभक्तित्वञ्च परिष्कृत्य निर्धारणीयम्।

सन् १९३३

१ व्याख्यानत इति परिभाषाया अवतरणाशयं निर्दोषार्थं बीजञ्च प्रदर्श्यास्या असाधारणफलं डादिविषये इति पंक्तेरभिप्रायश्च स्पष्टं वर्णनीयौ।

२ 'व्यपदेशिवदेकस्मिन्' इत्यत्रापेक्षिते आदित्वान्तत्वे सूत्रकारादिमतानुरोधेन परिष्कृत्याशास्त्रीयधर्मातिदेशे युक्तिं प्रदर्श्यैकस्मिन्नित्यस्य नागेशाभिमतमर्थं परिष्कृत्य तद्युक्तायुक्तत्वं विवेचनीयम्।

३ बहिरङ्गपरिभाषायां भाष्यादिविरोधपरिहारपूर्वकमङ्गपदार्थं सप्रमाणमुक्त्वाऽपरनिमित्तकत्वमन्तरङ्गत्वमित्यत्र गुणदोषौ विचार्य सामान्यापेक्षत्वमुपपाद्य निरसनीयम्।

४ वार्णादाङ्गं बलीय इत्यत्र ज्ञापकमुपन्यस्याभ्यासकार्ये तदुत्तरखण्डादेशस्येत्यत्र बीजं फलञ्च साधूपपाद्यास्याः प्रवृत्तिस्थलं सम्यक् प्रदर्शनीयम्।

५ सन्निपातपरिभाषायां सन्निपातस्वरूपं तत्कृतसङ्कोचप्रकारश्च प्रदर्श्य रामा-येत्यादावनुपपत्तिः सम्यगापाद्य परिहरणीया ।

सन् १९३४

१ यदागमपरिभाषाया अवतरणाशयमुद्देश्यत्वरूपषष्ठ्यर्थंफलं चोपपाद्य तद-नित्यत्वे प्रमाणमुच्यताम् ।

२ अर्थवद्ग्रहणपरिभाषाया युक्तिसिद्धत्वसूत्ररूपत्वे उपपाद्यानयोः पक्षयोः कतरो ज्यायान् इति सप्रमाणमुपपादनीयम् ।

३ "अन्तरंगानपि विधीन् बहिरंगो लुग्बाधते" इत्यस्यां परिभाषायां प्रमाणं फलं च स्पष्टमुपपादनीयम् ।

४ उपसञ्जनिष्यमाणपरिभाषायां प्रमाणफले अर्थप्रदर्शनपूर्वकं निरूपणीये ।

५ अकृतव्यूहपरिभाषां ग्रन्थोक्तदिशा निराकृत्य तस्याः फलमस्ति न वेति स्फुटमुपपादनीयम् ।

६ गतिकारकोपपदानामिति परिभाषा फलप्रमाणप्रदर्शनपूर्वकं व्याख्येया ।

सूचना—एषु षडेव प्रश्नाः समाधेयाः ।

सन् १९३५

१ कार्य्यमनुभवन्निति परिभाषायाः फलप्रमाणे निरूपणीये ।

२ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषायाः फलप्रमाणे निरू-प्यास्याः कृन्मात्रग्रहणे प्रवृत्तौ फलप्रमाणे निरूप्येताम् ।

३ मतान्तरनिरासेन पुनः प्रसंगसकृद्गताविति न्यायौ युक्तिफलाभ्यां निरूप्यौ ।

४ अकृतबहिरंगत्वं भाष्यादिविरोधेन निराकृत्य विशेषापेक्षाद् सामान्या-पेक्षमन्तरंगमिति मतमुपपाद्य निरस्यताम् ।

५ अनन्त्यविकारपरिभाषाया निष्कृष्टार्थं निरूप्य तत्फलानामन्यथासिद्धत्वं कर्त्तुं शक्यते न वेत्युच्यताम् ।

६ श्तिपा शपाऽनुबन्धेनेति परिभाषाया मुनित्रयानभिमतत्वं प्रतिपादनीयम् ।

सूचना—एषु पञ्चैव केचन समाधेयास्ते च समाङ्काः ।

१९३६

१ "अनेकान्ता अनुबन्धाः" इत्यत्रत्ययोर्हेतुसाध्ययोः स्वरूपे परिष्करणीये सम्भावितदोषाणां निराकरणेन । १०

२ निर्दिश्यमानपरिभाषा तथा परिष्क्रियतां यथा स्नात्वाकालकीकृत्य जराजरसौ सजूः सजूर्भ्यामित्यत्र दोषलेशो नापतेत् । १०

३ वार्णादाङ्गं बलीय इति परिभाषायाः प्राचीनोक्तं ज्ञापकमुपपाद्य नव्यमतानुसारेणाऽपि ज्ञापकमुपदर्श्य आङ्गवार्णयोः समानकार्य्यित्वे सा परिभाषा प्रवर्त्तेत इत्यत्र फलप्रमाणे निरूपणीये । १०

४ येन नाप्राप्त इति परिभाषायां साक्षादुद्देश्यतावच्छेदकधर्म्मयोर्व्याप्यव्यापकभावो बाधप्रयोजक उत साक्षात्परम्परासाधारणोद्देश्यतावच्छेदकधर्म्मयोरिति सप्रमाणं निरूप्य बाधबीजानि सोदाहरणानि निरूप्यन्ताम् । १०

अथवा

अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इत्यस्य फलप्रमाणे सविस्तरं निरूपणीये । १०

५ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषां परिष्कृत्य तत्र फलप्रमाणे प्रदर्श्यैतस्या अप्रवृत्तिस्थलानि सोदाहरणानि परिगणनीयानि । १०

१९३७

१ यथोद्देशपरिभाषाविषये नव्यप्राचीनयोर्मते पृथगुपपाद्य तत्र युक्तायुक्तत्वे विविच्य संज्ञाशास्त्रस्य कार्य्यकालपक्षे पदैकवाक्यता वाक्यैकवाक्यता वा युक्तेति निरूप्यताम् ।

२ कार्य्यमनुभवन्निति परिभाषायाः फलं निरूप्यैतस्या भाष्यध्वनितत्वं विचार्य्यताम्, फलस्यान्यथासिद्धिः सम्भवति नवेति विविच्यतां च ।

३ व्यपदेशवदिति परिभाषाघटकैकपदार्थं परिष्कृत्यैतस्यां फलप्रमाणे निरूप्यान्तत्वादिकं साधु परिष्कृत्यैतयाऽतिदेष्टव्या धर्म्माः प्रदर्शनीयाः ।

४ अन्तरङ्गपरिभाषायां कीदृशमन्तरङ्गत्वं सिद्धान्ते ग्राह्यमिति निरूप्य अधिकापेक्षस्य विशेषापेक्षस्य च बहिरङ्गत्वं प्राचीनसम्मतं भाष्याविरोधसम्पादनेन निरस्यताम् ।

५ येन नाप्राप्तन्यायविषये बाधबीजानि प्रदर्श्य तेषु कस्यचिदेकस्यैवाङ्गीकारे सर्वकार्य्यनिर्वाहः सम्भवति नवेति निरूप्यताम् ।

६ सन्निपातपरिभाषायां फलप्रमाणे उपपाद्यैतया क्रियमाणस्य सङ्कोचस्य प्रकारः प्रदर्शनीयोऽनित्यत्वे फलप्रमाणे च वर्णनीये ।

अवधेयम्

सर्वे प्रश्नाः समानाङ्कभागिनः। तेष्वाद्येषु त्रिषु द्वयारवशिष्टानां च त्रयाणामिति पञ्चानामेव समाधानमपेक्ष्यते ।

## व्याकरणमाहाभाष्ये प्रश्नाः ।

### ३ वर्षे द्वितीयम्पत्रम् ।

### सन् १९३१

१ वर्णा अर्थवन्त इत्यत्र के हेतवः तथा वर्णा अनर्थका इत्यत्र च के हेतवः कश्च तत्र सिद्धान्तः ।

२ 'न धातुलोपे' इति सूत्रस्य प्रत्याख्यानमार्गं प्रदर्श्य-(अ) अन्याभावो द्विवचनटाण्विषयत्वात्, (इ) अनेकान्तो ह्यनन्यत्वकरः (उ) ओदौदादेशस्य चुटुतुशरादेः, एतद्वार्तिकत्रयं प्रसङ्गसङ्गतिप्रदर्शनपूर्वकमुपपादनीयम् ।

३ 'ऋलृक्' इत्यत्र लृकारोपदेशस्य, 'प्रत्ययस्य लुक्श्लुलुपः' इत्यत्र प्रत्ययस्येत्यस्य च प्रयोजनं लिख्यताम् ।

४ संनिपातपरिभाषायाः, 'नानर्थकेऽलोऽन्त्यविधिः' इत्यस्याः परिभाषायाश्च प्रत्येकं कतिपयान्युदाहरणानि प्रदर्श्य नानर्थक इति परिभाषाया भाष्योक्तप्रत्याख्यानप्रकार उपपादनीयः ।

५ 'न पदान्त' इति सूत्रे विधिशब्दस्य भावसाधनत्वकर्मसाधनत्वपक्षावुपपाद्य तत्रत्यसिद्धान्तः सप्रमाणं प्रदर्शनीयः ।

### सन् १९३२

१ व्याकरणशब्दस्यार्थं भाष्योक्तदिशा प्रतिपाद्य तद्वच्च तपरकरणम्, हल्ग्रहणेषु च, रूपसामान्याद्वा, वार्तिकान्येतानि व्याख्यायन्ताम् ।

२ गुणानां भेदकत्वपक्षे दूषणान्यभिधायाभेदकत्वपक्षः स्थापनीयः, ''न धातुलोप आर्द्धधातुके'' इति सूत्रं प्रत्याख्येयं च ।

३ ईदूदेद्द्विवचनं प्रगृह्यम्, सूत्रेऽस्मिन् प्रतिपादितानां पक्षाणां स्वरूपं प्रदर्श्य तत्र तत्रास्वरसोद्भावनपूर्वकं सिद्धान्तसंमतः पक्षः स्थापनीयः ।

४ क्विल्लुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसङ्ख्यानम्, वार्तिकमिदं सोदाहरणं विशदं व्याख्यायताम् ।

५ स्थानिवत्सूत्रस्य संपूर्णस्य ज्ञापकसिद्धत्वमुपपाद्यारम्भपक्षे आदेशग्रहणफलं निरूप्यताम् ।

सन् १९३३

१ व्याकरणस्य प्रयोजनानि ससंक्षेपमुल्लिख्य, "लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्म्मनियमः" इति वार्तिकं सशङ्कासमाधि व्याख्यायताम् ।

२ वर्णैकदेशानां वर्णग्रहणेन ग्रहणे दूषणभूषणान्यभिधाय, "दीधीवेवीटा-मि"तिसूत्रं प्रत्याख्यायताम् ।

३ "इको गुणवृद्धी" इतिसूत्रे इग्ग्रहणस्य प्रयोजनं समुल्लिख्य "कृन्मेजन्त-श्चानिकारोकारप्रकृतिरि"ति वार्तिकं सफलीकृत्य प्रत्याख्यायताम् ।

४ "प्रत्ययस्य लुक्श्लुलुपः"–सूत्रेऽस्मिन् प्रत्ययग्रहणस्य फलं प्रदर्श्य अव्ययी-भावस्याव्ययत्वे प्रयोजनानि लिख्यन्ताम् ।

५ "स्वं रूपं शब्दस्याशब्दसंज्ञा"—सूत्रमिदं भाष्यरीत्या व्याख्याय प्रत्या-ख्यायताम् ।

## व्याकरणमहाभाष्ये, मनोरमाशब्दरत्नीय-
## कारकाव्ययीभावयोश्च–प्रश्नाः ।

३ वर्षे २ पत्रम् ।

सन् १९३४

१ लृकारोपदेशे निर्दुष्टं फलं विलिख्य वर्णानामुपदेशे फलानि निरूप्यन्ताम् ।

२ वर्णानामर्थवत्त्वमनर्थकत्वञ्च प्रपञ्च्य "मुखनासिकावचनोऽनुनासिकः" इति सूत्रे मुखग्रहणं प्रत्याख्यायताम् ।

३ "तुल्यास्यप्रयत्नं सवर्णम्" इति सूत्रे आस्यग्रहणप्रयोजनं समुल्लिख्य "न धातुलोप आर्धधातुके" इति सूत्रं प्रत्याख्यायताम् ।

४ गतिबुद्धीत्यादिसूत्रस्य समुचितमर्थं प्रतिपाद्य विध्यर्थत्वं नियमार्थत्वञ्च सविस्तरं समुल्लिख्य तयोर्युक्तियुक्तः पक्षः स्थाप्यताम् ।

५ "दिवस्तदर्थस्ये"ति सूत्रस्यार्थं प्रतिपाद्य अत्र सूत्रे शेष इति सम्बध्यते न वा ? नो चेत्कथमिति सप्रमाणमुपपाद्यताम् ।

सन् १९३५

१ शब्दानुशासनप्रयोजनानि विलिख्य तेषां समुदायद्वयेन निर्देशे बीजं प्रदर्शयत ।

२ इको गुणेतिसूत्रे तच्छेषपक्षे दूषणानि तदुद्धारप्रकारश्च भाष्योक्तो वर्णनीयः।

३ क्ङिति चेति सूत्रे निमित्तग्रहणस्य प्रयोजनान्युपदर्श्य तेषामन्यथासिद्धिः करणीया।

४ अकथितं चेति सूत्रस्य समुचितमर्थं सोदाहरणं निरूप्य तत्सूत्रावश्यकतां प्राङ्नव्यमतभेदप्रदर्शनपुरःसरं निर्वर्ण्य समुचितपक्षो युक्त्या व्यवस्थाप्यताम्।

५ प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते॥

इतिहरिकारिकाद्वयं सम्यग्व्याख्याय "पक्त्वौदनो भुज्यते" इत्यादिप्रयोगविषये प्राचीननवीनयोर्मतें पृथङ् निरूप्य तत्र युक्तायुक्तत्वे विवेचनीये।

सन् १९३६

१ "सिद्धे शब्दार्थसम्बन्धे" इति वार्त्तिकस्य प्रकृतेन सङ्गतिमुपदर्श्य शब्दार्थसम्बन्धानां नित्यतादिप्रतिपादनसुखेन सप्रमाणसिद्धशब्दार्थनिरूपणेन च वार्तिकं व्याख्यायताम्।

२ "ऋलृक्" सूत्रे लृकारग्रहणप्रयोजनानि प्रत्याख्याय तत्र लृकारग्रहणप्रत्याख्यानयोः कतरद् युक्तमिति सोपपत्तिकं सिद्धान्तय।

३ गुणानाम् भेदकत्वमभेदकत्वं चोपपाद्य तत्र विषये भाष्यकारसिद्धान्तो वर्णनीयः।

४ "मुखनासिकावचनोऽनुनासिकः" इति सूत्रे मुखग्रहणस्य प्रयोजनं प्रत्याख्यानप्रकारं च दर्शय।

५ प्रतिपादिकार्थसूत्रे परिमाणग्रहणस्य प्रयोजनं प्राचीननवीनमतानुसरणेन पृथक् निरूपणीयम्।

६ "अधीगर्थदयेशां कर्मणि" इति सूत्रस्य प्रयोजनं मनोरमोक्तदिशोपवर्ण्य समासान्तानां समासस्य समासार्थविग्रहवाक्योत्तरपदस्य वा चरमावयवत्वमिति सम्यक् निरूपय।

सन् १९३७

१ "सक्तुमिव तितउना" इति मन्त्रं व्याख्याय वर्णोपदेशप्रयोजनं लिखत। ८

२ वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते न वा? अयोगवाहानां कुत्र कुत्रोपदेशः, तस्य च कानि प्रयोजनानि? ८

३ "इको गुणवृद्धी" इति सूत्रे इग्ग्रहणप्रयोजनं सप्रपञ्चं भाष्योक्तदिशा निरूपयत। ६

४ "इको गुणवृद्धी" इति सूत्रे तच्छेपतदपवादपक्षौ निरूप्य संदूष्य च पदोपस्थितिपक्षस्थापनप्रकारं लिखत। ८

अथवा।

प्रत्येकं संयोगसंज्ञा समुदायस्य वेति साधकबाधकोपन्यासेन विकल्प्य तत्र सिद्धान्तपक्षं समर्थयत। ८

५ गतिबुद्धिसूत्रस्य विधायकत्वं नियामकत्वं च प्राङ्नव्यमतेनोपपाद्य कतरः पक्षः श्रेयानिति सप्रमाणं वदत। १०

अथवा।

"कर्तृकर्मणोः कृति" इति सूत्रे कृतिग्रहणस्य प्रयोजनं सविशेषं प्रदर्श्य "परस्परेण स्पृहणीयशोभम्" 'कुमार्यं इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च' अनयोस्तृतीयाषष्ठीविभक्त्योः साधुत्वमुपपादयत। १०

६ विभाषाधिकारस्य प्रयोजनं निरूप्य 'अनुगङ्गं वाराणसी' इति वाक्यस्यार्थः सोपपत्ति वर्णनीयः।



प्राप्तिस्थानम्—

जयकृष्णदास-हरिदास गुप्त—

चौखम्बा संस्कृत पुस्तकालय,

बनारस सिटी।

# परिष्कारदर्पण

**( परिष्कारों का विचित्रग्रन्थ शास्त्रार्थकलासहित )**

आप महानुभावों की सेवा में निवेदन करते हुए अत्यन्त हर्ष होता है
कि जिस परिष्कारदर्पणनामक ग्रन्थ के लिये विद्वज्जन बहुत दिनों से आका-
ङ्क्षित थे वह प्रकाशित हो गया। इस ग्रन्थ में ३ प्रकरण हैं। जिसमें प्रथम
प्रकरण पारिभाषिक ( अवच्छेदकत्त्व अवच्छेद्यत्त्व निरूपितत्त्व निरूपकत्त्व
सम्बन्धावच्छिन्नत्त्व आदि ) शब्दों के लक्षण उदाहरण समन्वय दोषा-
दिवारणपूर्वक दिखाये हैं। द्वितीयप्रकरण व्याकरण के परिष्कारों तथा
पाणिनीय सूत्रों के शाब्दबोधों का है उसमें शेखरादि सहायक प्रायः सभी
स्थलों का परिष्कारविवरण परीक्षोपयोगी तथा अध्ययनाध्यापनादि का
महोपकारक है। इस ग्रन्थ के बनानेवाले जौनपुर बदलापुर निवासी
घटिकाशतकशतावधानाशुकविकौमुदीकल्पलतिकाद्यनेकग्रन्थकार वैयाकरण-
शिरोमणि प्रसिद्ध शास्त्रार्थी पण्डितप्रवर शुक्लश्रीवेणीमाधवशास्त्री जी हैं।
शास्त्री जी का अतुलनीय श्रम तथा इनकी विचित्र परिष्कारशैली एवं
कल्पनायें ग्रन्थ के देखने से ही आप को अनुभूत होंगी। ग्रन्थकार के
पुत्र श्रीराजनारायणशुक्लशास्त्री जी ने इस ग्रन्थ की भी टिप्पणी वैसी
ही विचित्र की है जैसी आप लोग कौमुदीकल्पलतिका में देख चुके
होंगे। इस ग्रन्थ को पास में रखने से पूर्ण विश्वास है कि परिष्कारों का
बनाना समझना तथा उनके द्वारा परीक्षा में उत्तीर्ण होना अतीव सरल है।
शास्त्री—आचार्य परीक्षाओं का अत्यन्त उपकारक है। तृतीयप्रकरण इस
ग्रन्थ का शास्त्रार्थकला नाम से है। जिसमें परिभाषेन्दुशेखर की परीक्षोप-
योगिपरिभाषाओं का ज्ञापक परिष्कारादि दिखलाते हुये अन्त में विचित्र
कल्पनाओं द्वारा शेखर ही का खण्डन कर दिया गया है। उपरोक्तविषयों
से यह ग्रन्थ अत्यन्त उपादेय हो गया है। इतना होते हुये भी इसका मूल्य
स्वल्प ही १=) अट्ठारह आना मात्र रक्खा है। अधिक क्या प्रशंसा करें
यदि इसके लिये अतिशीघ्र आर्डर न दिये तो इसके आधुनिकलक्षणों से
प्रतीत होता है कि द्वितीयसंस्करण की प्रतीक्षा करनी पड़ेगी।

---

प्राप्तिस्थानम् **चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी।**

छप गया !　　　　छप गया !!　　　　छप गया !!!

## परीक्षा तथा शास्त्रार्थ के लिये अत्यन्त उपयोगी

## शास्त्रार्थकलाटीकासहित

# व्युत्पत्तिवाद

टीकाकार—कौमुदीकल्पलतिकापरिष्कारदर्पणाद्यनेकग्रन्थकार-
घटिकाशतकशतावधानाशुकवि वैयाकरणशिरो-
मण्याद्यनेकपदवीक प्रसिद्ध शास्त्रार्थी
**शुक्ल श्रीवेणीमाधवशास्त्री जी ।**

माननीय संस्कृतानुरागि विद्वज्जन एवं स्वाध्यायतपःप्रवृत्त-
छात्रवर्ग ?

यह आप लोगों से छिपा नहीं है कि शब्दखण्ड के लिये म० म० श्रीमद्गदाधरभट्टाचार्य जी का बनाया हुआ व्युत्पत्तिवाद कितना उपकारक एवं परममहान ग्रन्थ है ! इसी लिए व्याकरण तथा न्याय की सब स्थान की राजकीय आचार्यपरीक्षाओं के अन्तिम खण्डों में पाठ्य रूप से यह ग्रन्थ निर्धारित किया गया है । इस ग्रन्थ पर अभी तक कोई भी ऐसी टीका नहीं निकली थी जो कि शास्त्रार्थ तथा परीक्षा दोनों ही को उपयोगी हो । इस लिये हमने श्रीमान् शास्त्री जी से इस अपूर्व टीका को बनवा कर द्वितीया कारकपर्यन्त इस पुस्तक को प्रकाशित किया है । इस टीका में "इति परीक्षालेखप्रकारः" "अथ शास्त्रार्थप्रकारः" ऐसे विभाग बने हैं जिससे विद्यार्थियों को परीक्षा में उत्तीर्ण होना सरल हो गया है । टीकाकार के सुपुत्र शुक्ल श्री राजनारायणशास्त्री जी ने इस ग्रन्थ का भी विचित्र टिप्पणियों द्वारा सुन्दर सम्पादन किया है । पुस्तक की मनोहारिता तथा उपयोगिता देखने से ही मालूम हो जायगी । उपकार और प्रचार की दृष्टिसे लगभग ३०० पृष्ठ की, सुन्दर छपाई ग्लेज़ कागज आदि से युक्त सजिल्द पुस्तक का मूल्य भी लागत मात्र २) रु० कमीशन काट कर १॥।) रक्खा गया है । आशा है कि आपलोग इस सुअवसर को हाथ से न जाने देंगे ।

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी

